श्रीगणेशायनमः ॥ अथ केदारकल्पप्रारम्भः ॥ ॐ श्रीदक्षिणामूर्तयेन
मः ।एकदापर्वतासीनंदेवदेवंजगद्गुरुम्॥प्रणम्यपरिपप्रच्छकार्तिकेयोमहाभुजः ॥
॥ १ ॥ कार्तिकेयउवाच ॥ मेरुपृष्ठेसुखासीनंदेवदेवंजगद्गुरुम् ॥ प्रणम्यचजग
न्नाथंसर्वपूर्णेश्वरेश्वरम् ॥२॥ अहंपृच्छांकरोमीशसाधकानांहितायच ॥ महापथं
चपश्यंतिकथंसत्वंचमानवाः ॥ ३ ॥ तस्यार्थेचफलंब्रूहिसत्यंदेवसदाशिव ॥ ग
च्छंतिसाधकाः सर्वेस्वयंदेहेनशंकर ॥ ४ ॥ देवदेवजगन्नाथलोकानुग्रहकारक ॥
हितंलोकस्यपृच्छामियेनमुक्तिमवाप्नुयात् ॥ ५ ॥ विनाजाप्यंविनाध्यानंविनायो
गस्यसाधनम् ॥ गम्यतेमुक्तिमार्गेणस्वदेहेननसंशयः ॥६॥ श्रीईश्वरउवाच ॥
धन्योवत्सयसित्वेकंलोकानामुपकारकम् ॥ यन्मांपृच्छसितत्त्वेनशृणुतत्त्वंब्रवीमिते

3

॥ ७ ॥ केदारगमनंपुण्यंमहापथसमाश्रयम् ॥ पश्यन्तिमानुषाधन्यायेषांशुद्धंकु
लद्वयम् ॥ ८ ॥ कोर्थः पुत्रेणजातेनमातुर्यौवनहारिणा ॥ आगत्यमानुषेलोकेन
दृष्टश्चेन्महापथः ॥ ९ ॥ देशाधन्याश्चजायंतेसधन्यःसाधकोत्तमः ॥ यस्यगेहे
चलिखितंपुस्तकंपर्वतेशुभम् ॥ १० ॥ गंगाद्याःसरितस्तत्रसर्वतीर्थावसंतिवै ॥
तस्माद्दानेनविधिनाशृणुयाद्वासमाहितः ॥ ११ ॥ विल्ववृक्षस्ततोमूलंलक्षमंत्रं
जपेद्बुधः ॥ ततः सिद्धशरीरोसौहिमेनैवप्रहन्यते ॥ १२ ॥ अघोरान्नापरोमंत्रो
महिम्नोनापरास्तुतिः ॥ महेशान्नापरोदेवोनास्तितत्त्वंगुरोः परम् ॥ १३ ॥ अ
घोरमंत्रंजानातिगुरुवक्त्राच्चनिर्गतम् ॥ सर्वधर्मार्थकामानांकैवल्यस्यचभाजन
म् ॥ १४ ॥ भुक्तिर्मुक्तिर्मतंसर्वंनित्यंतस्यगृहांगणे ॥ अणिमादिकमैश्वर्यंद्वारे

तस्यचवैभवेत् ॥ १५ ॥ तस्मात्सर्वप्रयत्नेनगुरुंयोग्यंसमाश्रयेत् ॥ करसंपुटंकृ
त्वात्रैकुर्यात्साष्टांगमेवच ॥ १६ ॥ संसारतापसंतप्तंमूर्द्धन्यावर्षशंकर ॥ दुःखां
बुधौमांमज्जंतंदत्वाहस्तावलंबनम् ॥१७॥समुद्धरमहाप्राज्ञःपाहिमांशरणागतम्॥
सर्वस्वंममयत्किंचित्त्वदीयंतन्नसंशयः ॥ १८ ॥ स्थिरंनचधनंकिंचित्नस्थिरंदे
हयौवनम् ॥ देहेनसंयुतंनैवकर्मणालभ्यतेफलम् ॥ १९ ॥ अतोधर्मसमूहेननैव
धर्मंतुलोपयेत् ॥ पद्मंत्वष्टदलंकुर्यात्तत्रपूजांसमाचरेत् ॥ २० ॥ ध्यायेत्श्री
शंकरंतत्रपार्वतीवल्लभंहरम् ॥ उपचारैः षोडशभिः सर्वशक्तिसमन्वितैः ॥२१॥
वलिप्रदानंकुर्वीतपुनःसर्वजनप्रिये ॥ वांछितांल्लभतेकामान्पुत्रपौत्रसमन्विता
न् ॥ २२ ॥ एवंसिद्धेनमंत्रेणसाधयेत्समनोरथम् ॥ यस्यकोपंसमासाद्यदेवताकं

4

पतेभयात्तं ॥ २३ ॥ इंद्राद्यादेवताः सर्वास्तंनमस्यंतिसाधकम् ॥ चक्रवर्तीभवेद्
भूयोयदीच्छेच्छिवबल्लभः ॥ २४ ॥ एतत्तेकथितंपुत्रमहापथविचारणम् ॥ अ
नित्यमसुखंल्लोकमिमंप्राप्यभजस्वमाम् ॥ २५ ॥ इदंपुत्रतवस्नेहान्महागुह्यंप्रका
शितम् ॥ नदेयंधनलुब्धेभ्योनदेयंदेवनिन्दके ॥ २६ ॥ नास्तिकेचैवदुर्बुद्धौतथा
चवककवृत्तये ॥ इतिश्रीरुद्रयामलेअघोरमंत्रस्यअघोरऋषिः बृहतीछंदः ॥ श्रीका
लाग्निरुद्रोदेवता ॥ ह्रींबीजं ॥ ॐ हुंफट्स्वाहाशक्तिः ॥ अघोरप्रसादसिद्ध्यर्थे
जपेविनियोगः ॥ अथकरन्यासः ॥ ॐह्रांअगुष्ठाभ्यांनमः ॥ ॐह्रींतर्जनीभ्यांन
मः ओंह्रुंमध्यमाभ्यांनमः ॥ ॐह्रैंअनामिकाभ्यांनमः ॥ ओंह्रौंकनिष्ठिकाभ्यांनमः।
ओंह्रः करतलकरपृष्ठाभ्यांनमः ॥ अथाङ्गन्यासः ॥ ओंह्रांहृदयायनमः ॥ ओं

ओंह्रींशिरसेस्वाहा ॥ ओंह्रुंशिखायैवषट् ॥ ओंह्रैंकवचायहुं ॥ ओंह्रौंनेत्रत्रयायवौ
षट् ॥ ओंह्रः अस्त्रायफट् ॥ अथध्यानम् ॥ ओंकैलाशासनमीश्वरंशशिकलंस
म्यक्स्फुरन्मंडलंनासालोकनतत्परंत्रिनयनंवीरासनाध्याश्रितम् ॥ मुद्राटंककरंच
जानुविमलेपाणिंप्रसन्नाननंकक्षाबद्धभुजंगमंमुनिवृतंवन्देमहेशंपरम् ॥२७॥ अथ
जपमंत्रः॥ओंह्रांह्रींह्रुंह्रैंह्रौंह्रः फट्स्वाहा॥अथसमर्पणमंत्रः॥ओंगुह्यातिगुह्यगोप्तात्वंगृ
हाणास्मत्कृतंजपम् ॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादान्महेश्वर ॥२८॥ अनेनजपनेए
तावत्संख्याकेनश्रीअघोररुद्रः प्रीयताम् ॥ अथस्त्रोत्रपाठः ॥ श्रीईश्वरउवाच॥
ओंनमः कामरूपायनमोमोक्षवपुर्भृते ॥ नमोनादात्मनेतुभ्यंनमोविंदुकलात्मने ॥
॥ २९ ॥ नमोस्तुलिंगरूपायलिंगातीतायतेनमः ॥ त्वंमातासर्वलोकानांत्वमेवज

केदार

गतः पिता ॥ ३० ॥ त्वंभ्रातात्वंसुहृत्मित्रंत्वंप्रियस्त्वंपितामह ॥ नमस्तेभगव

कल्प

नूरुद्रः भास्करामिततेजसे ॥ ३१ ॥ नमोभवायरुद्रायपरवृद्धिमयायच ॥ सर्वाय

३ शितिरूपायसदासुरभिणेनमः ॥ ३२ ॥ पशूनाम्पतयेचैवपावकामिततेजसे ॥ अ

तिभीमायसौम्यायअमृतायनमोस्तुते ॥ ३३ ॥ उग्रायययजमानायनमस्तेकर्मयोगि

ने ॥ पार्थिवानांचलिंगानांयन्मयापूजनंकृतम् ॥ ३४ ॥ तेनमेभगवान्रुद्रोवांछि

तार्थंप्रयच्छतु ॥ इदंस्तोत्रंपठेद्यस्तुपूजाकालेविधानतः ॥ ३५ ॥ चक्रवर्तीभवे

द्राजाचांतेशिवपुरंवसेत् ॥ इतिश्रीरुद्रयामलेसदाशिवस्तोत्रम् ॥ आदौकवचम् ॥

ॐअस्यश्रीसदाशिवकवचस्यभृगुऋषिः ॥ अनुष्टुप्छंदः॥ श्रीसदाशिवोदेवता ॥

कैलासवासिप्रीत्यर्थेजपेविनियोगः ॥ ॐशिवोमेअग्रतः पातुपिनाकीपातुपृष्ठतः । ३

त्रिपुरारिर्वामपार्श्वेदक्षिणेमदनांतकः ॥ १ ॥ ऊर्ध्वंपातुविशालाक्षोअधः कनक
पिंगलः ॥ पार्वतीवल्लभोजानुंजंघेनंदीश्वरः प्रभुः ॥ २ ॥ पादौमेपातुसर्वेशः
करौकालाग्निसेवकः ॥ शीर्षेमेपातुसर्वज्ञः कर्णौदेवेश्वरः सदा ॥ ३ ॥ गुह्यंगुह्ये
श्वरः पातुहृदयंहृदयेश्वरः ॥ सर्वांगेसर्वदेवेशः कामिनीवल्लभः कटिम् ॥ ४ ॥
यदिदंकचचंवत्सदेवानामपिदुर्ल्लभम्॥ एतस्यपठनादेवभूतप्रेतपिशाचकाः ॥५॥
नहिंसंतिसदासर्वेयेगणाविघ्नकारकाः ॥ इदंकवचमज्ञात्वायस्तुमंत्रंशिवात्मकम्॥
॥६॥ अघोरंजपतेवत्सतस्यविघ्नाः पदेपदे ॥ तस्मात्सर्वप्रयत्नेनकवचंभुविदुर्ल्ल
भम् ॥७॥ सेवनीयंप्रयत्नेनयदीच्छेदात्मनोहितम् ॥ सर्वरक्षाकरंपुण्यंसर्वपापविना
शनम् ॥ ८ ॥ इतिश्रीरुद्रयामलेशिवकार्तिकसंवादेशिवकवचम् ॥ अथपार्थिव

 

पूजा ॥ ओंपृथ्विवित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकु
रुचासनम् ॥१॥ अपसर्पंतुतेभूतायेभूताभुविसंस्थिताः ॥ येभूताविघ्नकर्तारस्ते
नश्यंतुशिवाज्ञया ॥२॥ ओंह्रांह्रींहरायनमः ॥ मृदाहरणं ॥ ओंहूंहैंमहेश्वरायन
मः ॥संघट्टनम्॥ ओंह्रौंह्रः फट्शूलपाणयेनमः ॥ प्रतिष्ठापनं॥अथध्यानम्॥ओंकैला
शंध्यात्वावहन्नासापुटेनांजलौसमानीयपुष्पंक्षिपेत्॥पिनाकधृक्यावत्त्वांपूजयामि॥
त्वंस्थिरोभव॥ ओंआंह्रींक्रौंयंरंलंवंशंषंसंहंसंमहादेवस्यप्राणाः॥ ओंइहप्राणाः सर्वें
द्रियाणिवाङ्मनःत्वक्चक्षुःश्रोत्रंप्राणघ्राणाःइहागत्यसुखंचिरंतिष्ठन्तुस्वाहा॥ओंपि
नाकधृक्इहसन्निहितोभव ॥ ओंओंशिवाययनमः ॥स्नानं॥ ओंपशुपतयेनमः॥
गन्धं ॥ ईशानादारभ्यावरणपूजनं ॥ अथावरणपूजा ॥ ओंसर्वायक्षितिमूर्त्तयेन

मः ॥ ओंभवायजलमूर्त्तयेनमः ॥ ओंरुद्रायआग्निमूर्त्तयेनमः ॥ ओंउग्रायवायुमूर्त्तयेनमः ॥ ओंभीमायआकाशमूर्त्तयेनमः ॥ ओंपशुपतयेयजमानमूर्त्तयेनमः ॥ ओंमहादेवायसोममूर्त्तयेनमः ॥ ओंईशानायसूर्य्यमूर्त्तयेनमः ॥ ओंनमः शिवाय पुष्पंधूपंदीपंनैवेद्यं ॥ अष्टोन्त्तरशतंजपेत् ॥ समर्पणं ॥ स्तुतिः। परिक्रमा। विसर्जनं ॥ अथशिवपूजा ॥ ओंहरायनमः ॥ मृदाहरणं ॥ ओंमहेश्वरायनमः ॥ संघट्टनं ॥ ओंशंभवेनमः ॥ आवाहनं ॥ ओंशूलपाणयेनमः ॥ प्रतिष्ठापनं ॥ ओंशिवइहतिष्ठ ॥ ओंनमः ओंसर्वज्ञज्ञानविज्ञानप्रदानैकमहात्मने ॥ नमस्तेसर्वदेवेशसर्वभूतहितेरत ॥ १ ॥ अनन्तकांतसंस्थानअनंन्तासनसंस्थित ॥ अनंतशक्तिसंपन्नपरमेशनमोस्तुते ॥ २ ॥ परापरपरातीतउत्पत्तिस्थितिकारक ॥ स

र्वार्थसाधनोपायविश्वेश्वरनमोस्तुते ॥ ३ ॥ स्वभावनिर्मलाभाससर्वव्याधिविना
शन ॥ योगीश्वरमहायोगिन्योगाधीशनमोस्तुते ॥ ४ ॥ कृतलिंगप्रतिष्ठानंध्या
येदेवंसनातनम् ॥ पूजयित्वाविधानेनइदंस्तोत्रमुदीरयेत् ॥५॥ लिंगस्तोत्रंमहा
पुण्यंयः शृणोतिसदानरः ॥ पापकंचुकनिर्मुक्तः प्राप्नोतिपरमंपदम् ॥६॥ नोत्पद्य
तेचसंसारेस्थानंप्राप्नोतिशाश्वतम्॥तस्मात्सर्वप्रयत्नेनशृणुयाच्छिवसंस्तवम्॥७॥
इतिश्रीलिंगपुराणेलिंगस्तवनस्तोत्रम् ॥ ओंपिनाकधनुषेनमः ॥ इतिध्यानम् ॥
ध्यायेनित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसं रत्नाकल्पोज्वलांगंपरशुमृगवरा
भीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यं
विश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् ॥ १ ॥ ओंशिवायनमः ॥ इतिमंत्रेण

इदंपाद्यं ॥ एषोऽर्घः इदमाचमनीयं ॥ इदंस्नानं ॥ एषगंधः ॥ एतानिपुष्पा
णि ॥ एषधूपः ॥ एषदीपः ॥ इदंनैवेद्यं ॥ आचमनं ॥ ओंशर्वायक्षितिमूर्त्तयेन
मः ॥ ओंभवायजलमूर्त्तयेनमः। ओंरुद्रायाग्निमूर्त्तयेनमः ओंउग्रायवायुमूर्त्तयेनमः।
ओंभीमायआकाशमूर्त्तयेनमः ॥ ओंपशुपतयेयजमानमूर्त्तयेनमः ॥ ओंमहादेवा
यसोममूर्त्तयेनमः ॥ ईशानायसूर्यमूर्त्तयेनमः ॥ जयेश्वरमहादेवजयभूतपतेहर ॥
चंद्रशेखरसंसारान्मोचयत्रिपुरान्तक ॥ महादेवक्षमस्वस्वस्थानंगच्छ ॥ इतिवि
सर्जयेत् ॥ ओंनमः शिवाय ॥ इतिश्रीलिंगपूजास्तोत्रंसम्पूर्णम् ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ अथश्रीकेदारकल्पप्रारम्भः ॥ श्रीईश्वरउवाच ॥ ओंशै
लराजस्यपृष्ठेतुशृणुस्थानानियानिते ॥ अस्तिपुरायामहादेविनदीवैतरणीशुभा॥

॥ १ ॥ पितॄणांतोयदानेनतृप्तिर्भवतिपुष्कला ॥ तत्रापिपरमंदेविपश्येद्रुद्रंहिमा
लयम् ॥२॥ हिमालयेतुचेद्दत्तंपूजामात्रंहिकांचनम् ॥ तेनदत्ताभवेत्सर्वासप्तद्वीपा
वसुन्धरा ॥ ३ ॥ आत्मानंघातयेद्यस्तुभृगुतुंगेषुमानवः ॥ इंद्रेणधारितंछत्रंरुद्र
लोकंसगच्छति ॥ ४ ॥ गत्वाहिमालयंपुण्यंदृष्ट्वामाहेश्वरंपदम् ॥ वंशान्संता
रयेत्सद्योदशपूर्वान्दशापरान् ॥ ५ ॥ द्वितीयमध्यमस्थानंतत्रमध्येकृतंमया ॥ त
त्रयास्यान्नदीपूज्यामहापुण्यासरस्वती ॥ ६ ॥ तत्तुंगेसाप्रतिष्ठापिप्रभातेतुप्रका
शिता ॥ सरस्वतीमहाध्यानादेवगंधर्वसेविता ॥ ७ ॥ मध्यमंचोदकंपीत्वापूर्णोभ
वतिमध्यमः ॥ ब्रह्मसूत्रंसमासाद्यसर्वपापप्रणाशनम् ॥८॥ श्रीदेव्युवाच ॥ मनु
ष्याणांहितार्थायउमापृष्टोमहेश्वरः ॥ तन्मेकथयदेवेशयत्रवैसंशयोमहान् ॥९॥

स्वभावात्परमंधामयथापुण्यमहंप्रभो॥ श्रोतुमिच्छामितत्त्वेनयुष्मद्वक्त्राद्विनिर्गतम्
॥ १० ॥ श्रीईश्वरउवाच ॥ शृणुदेवियथातथ्यंतीर्थसद्भावमुत्तमम् ॥ यदहंसंप्रव
क्ष्यामिनिखिलंतन्निबोधमे ॥ ११ ॥ तृतीयंतत्परंस्थानंकेदारंचेतिविश्रुतम् ॥ म
च्छरीराद्विनिष्क्रांतंशुक्रास्यंपानमुत्तमम् ॥ १२ ॥ केदारमुदकंदेवियेपिबंतिमहा
जनाः॥ममतुल्यबलाः सर्वेस्वर्गेस्वच्छंदगामिनः ॥१३॥ त्रिशूलांकितहस्तेनसर्वे
वैशूलपाणयः ॥ त्रिनेत्राश्चगणाभक्ताःसर्वेस्कन्दपराक्रमाः ॥ १४ ॥ मन्दाकिन्यां
नरः स्नात्वाचार्चयित्वावृषध्वजम् ॥ गणाधिपत्यंलब्ध्वाचकुलानामुद्धरेच्छतम्॥
॥१५॥ अत्रमंदाकिनीपुण्यानदीनामुत्तमानदी ॥ द्रावयेत्सर्वपापानिरुक्तास्तिभिर्बहु
धानुता ॥ १६ ॥ तस्यांस्वर्गच्युतायांतुशुचिः स्नातोहिमानवः ॥ यः पिबे न्त



देवेशिवामहस्तेनवैजलम् ॥१७॥ अंकितः स्यात्त्रिशूलेनललाटनयनेनच ॥ ग
णानांसंमतस्तेनपुनर्न्नविकृतोभवेत् ॥ १८ ॥ सधर्मंपरमंप्राप्यसत्यांतुलभतेग
तिम् ॥ गाणपत्यमवाप्नोतियत्रतत्रमृतोनरः ॥ १९ ॥ यस्यतोयंशरीरस्थंममलिं
गाद्विनिः सृतम् ॥ मृतोयत्रगतोवापिस्कंदस्यसदृशोभवेत् ॥ २० ॥ जन्मांतर
सहस्रैस्तुबहुभिः सभवेन्नरः ॥ ततोयातिपरंस्थानंकेदारंतीर्थमुत्तमम् ॥ २१ ॥
केदारंप्रस्थितेदेविम्रियन्तेचेतरेनराः ॥ तेपिसर्वेगणाध्यक्षाभवन्त्यमरतेजसः ॥
॥ २२ ॥ भस्मनोधारणंनित्यंशिवमंत्रस्यदीक्षया ॥ केदारोदकपानस्यकलांनार्ह
तिषोडशीम् ॥ २३ ॥ अनेकानिसहस्राणिक्रतूनांसुविशेषतः ॥ कलौकृत्वागति
र्नैषाकेदारेणतुयाभवेत् ॥२४॥ दिव्यवर्षसहस्राणितपस्तप्त्वातुपुष्करे ॥ नलभं

तेगंतिर्मर्त्याःकेदारेणतुयद्भवेत् ॥ २५ ॥ भूतंभव्यंभविष्यंचसर्वंलोकस्ययद्भवेत् ॥
सर्वंविदितमस्माकंनभवेत्तीर्थमीदृशम् ॥२६॥ केदारमुदकंपीत्वायत्रदेशेप्रपद्यते ॥
सोपिदेशोभवेत्पूतःकिंपुनस्तस्यबांधवाः ॥२७॥ आत्मावैपुत्रनामातुब्राह्मणोवेद
विद्भवेत् ॥ अंकितस्तुत्रिशूलेनह्यवश्यःसर्वदैवतैः ॥ २८ ॥ पृथिव्यांयानितीर्था
निपुण्यान्यायतनानिच ॥ केदारोदकपानस्यकलांनार्हंतिषोडशीम् ॥२९॥ वसेदी
शानमासाद्यहिमपूर्णमहागिरौ ॥ यावत्तेक्रमतेछायावृतिमात्रंतथापुनः ॥ ३० ॥
अंतेवायदिवामध्येयेमृताहिमवद्गिरौ ॥ तावत्तेदिवितिष्ठन्तियावदिंद्राश्चतुर्दश॥
॥ ३१ ॥ आत्मानंघातयेद्यस्तुप्रत्यक्षंवाहुताशने ॥ नतांगतिमवाप्नोतिकेदारेण
तुयाभवेत् ॥३२॥ सकृत्पीत्वातुकेदारेवाराणस्यांसकृद्गतः॥ब्रह्मविद्यांसकृज्जप्त्वास

 



भवंनपुनर्लभेत् ॥ ३३ ॥ विषमंदुर्गमंघोरंप्रविश्यहिमवद्गिरौ ॥ केदारस्योदकं
पीत्वामृतेनापिनशोचते ॥ ३४ ॥ सकृत्पीत्वाचकेदारेममतुल्यबलोभवेत् ॥ अ
दृश्यः सर्वभूतानांविचरेच्चयदृच्छया॥३५॥दिव्यंतरिक्षंपातालेयत्रयत्रयथेच्छते॥म
मदेवप्रसादेनक्रीडतेकामरूपधृक् ॥ ३६ ॥ केदारस्यकथांदिव्यांपवित्रांपापनाशि
नीम् ॥ येस्मरंतिसदायुक्तास्तेचैवादिविदेवताः ॥ ३७ ॥ यावत्प्रधानपुरुषोयाव
च्चाहंमहेश्वरः ॥ ममदेहस्वरूपेणयत्राहंतत्रतेस्मृताः ॥ ३८ ॥ एतच्चपरमंगु
ह्यंतवदेविह्युदाहृतम् ॥ यस्तंधारयतेनित्यंयश्चैवशृणुयान्नरः ॥ ३९ ॥ मुच्यते
सर्वपापेभ्योरुद्रलोकेसगच्छति ॥ ४० ॥ ( इति श्रीकेदारकल्पे ईश्वरकार्तिकसं
वादे प्रथमःपटलः ॥ १ ॥ ) श्रीदेव्युवाच ॥ ओंक्षेत्राणांपरमंक्षेत्रंतीर्थानांचैव

यत्स्मृतम् ॥ प्रमाणंतस्यक्षेत्रेणश्रोतुमिच्छामितत्त्वतः ॥ १ ॥ श्रीईश्वरउवाच ॥
दक्षिणोत्तरतश्चैवपंचयोजनमायतम् ॥ पूर्वपश्चिमतश्चैवयोजनत्रयमायतम् ॥२॥
तस्मिंस्तुपर्वतेदेवाऋषयश्चतपोधनाः ॥ क्षेत्रस्यवाह्यतः सर्वेतपः कुर्वं
तिपुंगवाः ॥ ३ ॥ सिद्धगंधर्वयक्षाणांकिन्नराश्चाप्सरोगणाः ॥ केदारकांक्षिणः
सर्वेसमाराधनतत्पराः ॥ ४ ॥ नलभन्तेसुरादेवायेचान्येदिव्यजातयः ॥ यक्षैस्तु
रक्षितंस्थानंनंदिस्कंदपुरोगमैः ॥ ५ ॥ विनायकोमहाकालईशानश्चमहाबलः ॥
जयाचविजयाचैवमोहिनीस्तंभिनीस्तथा ॥ ६ ॥ ममरूपधराः सर्वेक्षेत्रंरक्षंतिस
र्वशः॥षष्टिकोटिगणानांचक्षेत्रपालाः प्रकीर्तिताः ॥७॥ नंदीचैवमहाकालः सत
तंक्षेत्ररक्षकौ ॥ अहंतत्रस्थितोदेवित्वयासहवरानने ॥८॥ दुष्प्राप्यंचैवकेदारंदेवा

नामपिदुर्ल्लभम् ॥ क्षेत्राणांपरमंक्षेत्रंतीर्थानांतीर्थमुत्तमम् ॥९॥ तत्रस्नानाद्दिवंयां
तिमुक्ताःसंसारबन्धनात् ॥ अक्षयाःपरमाश्चैवमत्प्रसादाद्भवंतिते ॥१०॥ ब्रूह्मह
 त्याकृतायेचयेचान्येपापकारिणः ॥ नपश्यंतिशुभंदेविशुद्धाश्चापिभवंतिते ॥११॥
येषुयेषुचकार्येषुयांतिमामपिसुव्रते ॥ तेषुतेषुचयोगेषुजायतेमत्प्रसादतः ॥ १२॥
तावत्तेबहवोवर्णाः सर्वेकेदारकांक्षिणः॥ केदारंचैवसंप्राप्ताः सर्ववर्णाद्दिंजातयः॥
॥ १३ ॥ रश्मिभिर्ममतेस्पृष्टाअवज्ञातास्तुयेनराः ॥ तत्रयांतिपरंदेविपूर्वंश
प्तास्तुतेमया ॥ १४ ॥ पूर्वंशप्तास्तुयेदेवितेभवंतिगणेश्वराः ॥ तेषांचानिर्मितंदे
विकेदारोदकमुत्तमम् ॥१५॥ तेनपीतनमुच्यंतेजन्मसंसारबंधनात्॥त्रिनेत्राःशूल
हस्ताश्चशशांकांकितमूर्द्धजाः ॥ १६ ॥ व्याघ्रचर्मधराः सर्वेममपुत्रामहाबलाः ॥ 

ममवीर्यसमुत्पन्नाः सर्वेतेमत्पराक्रमाः॥१७॥योपिबंतिनराःसर्वेतेभवंतिगणेश्वराः॥
गणाधिपत्यंकेदारेतेनतीर्थंतदुत्तमम् ॥ १८ ॥ नतस्यसदृशंपुण्यंत्रिषुलोकेषुविद्य
ते ॥ पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच ॥ १९ ॥ केदारस्यतुतोयस्यक
लांनार्हंतिषोडशीम् ॥इदंक्षेत्रंसमासाद्य चैकरात्रंवसेत्तुयः ॥ २० ॥वासस्तस्यभवे
द्देवीनित्यकालंशिवालये ॥ मंदाकिन्यांनरःस्नात्वापितृपुण्योदकंददत् ॥ २१ ॥
नारितानिचतेनैवकुलान्येकोत्तरंशतम्॥इदंक्षेत्रंपरंदेविदेवानामपिदुर्लभम् ॥२२॥
दृष्टंपीतंजलंचात्रसंसारभयभेदकम्॥ योपिप्रदक्षिणांकुर्य्यात्तत्स्थानंपुरुषोत्तमः॥
॥ २३ ॥ प्रदक्षिणाकृतातेननसप्तद्वीपावसुंधरा ॥ यत्फलंसर्वतीर्थानांसर्वयज्ञेषु
तत्फलम्॥ २४ ॥तत्फलंलभतेयज्ञैः साश्वमेधैःसदक्षिणैः॥ तत्फलंकोटिगुणितंल

भतेनात्रसंशयः ॥ २५ ॥ तप्तकांचनवर्णाभासर्वाभरणभूषिता॥ विचरंतिगणादे
विसर्वभूतविमर्दकाः ॥ २६ ॥ ऋषीणांचैवदैत्यानांयक्षगंधर्वरक्षसाम् ॥ ग्रहाणां
भूतसंघानांयेचकेचिद्विरोधकाः ॥ २७ ॥ इन्द्रोवायदिवाब्रह्माविष्णुर्वापिप्रजाप
तिः ॥ एतेषांचैवसर्वेषांसोवध्योनात्रसंशयः॥ २८ ॥ येदेविममभक्ताश्चमृताः के
दारचिंतकाः ॥ तेपिसर्वेगणामह्याभवंत्येवनसंशयः ॥ २९ ॥ एककालंद्विकालं
वात्रिकालंनित्यमेवच ॥ येस्मरंतिचकेदारंशिवभक्ताजितेंद्रियाः ॥ ३० ॥ नतेषां
विद्यतेपापंसहस्रगुणितंफलम् ॥ तत्फलंलभतेयज्ञैः साश्वमेधैःसदक्षिणैः ॥३१॥
(॥ ॥ इति श्रीकेदारकल्पे उमामहेश्वरसंवादे द्वितीयःपटलः ॥ २ ॥ ॥)
ओंअतःपरंप्रवक्ष्यामिकेदारस्यतुयत्फलम् ॥ ममवीर्यस्थितंदेविकेदारंतीर्थमुत्तमम्

॥१॥ तत्रपीत्वानशोचंतिजन्मसंसारबंधनात् ॥ तिर्यग्योनिगतादेविनलभंतेकदा
चन॥ २॥ इदंतीर्थमिदंतीर्थंकिंभ्रमंतिचसाधकाः ॥ सकृत्पीत्वातुकेदारंभवेयुर्मम
सन्निभाः ॥ ३ ॥ आहूताःसंप्लवैःसुभ्रुब्रह्मविष्णुमहेश्वराः ॥ नतेषुपतनंदृष्टंम
मतुल्याविभावयेत् ॥ ४ ॥ तथैवममभक्तायेमत्कथारंजिताश्चये ॥ केदारोदकंपी
त्वायेनतेषांविद्यतेभयम् ॥५॥ यथाहंसर्वलोकेषुपूज्यमानःसुरासुरैः ॥ तथैवतेवि
शालाक्षिपूज्यंतेदिविदैवतैः ॥ ६ ॥ नजन्मन्येवदुः खानिबंधःकश्चिन्नजायते ॥
सततंतर्पितादेविममतुयेनपुत्रकाः ॥ ७ ॥ यथास्कंदश्चनंदिश्चमहाकालोविना
यकः ॥ तथातेममपुत्राश्चविचरंतिनसंशयः ॥८॥ क्रीडंतेसर्वदादेविगणैःसार्द्धं
वरानने ॥ कामरूपधराश्चैवतेवर्द्धंतेममतेजसा ॥९॥यत्राहंतेगणास्तत्रविचरंतिन

13

संशयः ॥ अहमेववरारोहेगणैः परिवृतः सदा ॥ १० ॥ तीर्थानांपरमंतीर्थंगतीनां
परमागतिः ॥ ज्ञानानांपरमंज्ञानंमोक्षानांमोक्षमुत्तमम् ॥११॥ अपूर्वंसर्वतीर्थानां
मनसोभीष्टदायकः ॥ क्षेत्रंतुपरमंदेवीकेदारंतीर्थमुन्त्तमम् ॥१२॥ एकोवापिजनो
यःस्यात्केदारगतिनिश्चितः ॥ तेनशोधितआत्मावैंकुलानामुद्धृतंशतम ॥ १३ ॥
कालंजरेमहाकर्णेवाराणस्यांहरालये॥अनाशनमृतानांचयत्फलंपरिकीर्तितम् १४॥
सर्वावस्थांगतस्यापिभुंजतोविषयानपि॥त्रिकालमश्नुतोवापिकेदारंतुफलप्रदम् ॥
॥१५॥ अन्यतीर्थसमायोगेयस्तुप्राणान्परित्यजेत् ॥ नतांगतिमवाप्नोतिकेदारंन
तुयांलभेत्॥१६॥पंचाग्नीन्धारयेन्नित्यमन्यक्षेत्रेषुमानवाः॥ सवामकरपानोवागतिम्
प्राप्नोतिचोत्तमाम्॥१७॥(इतिश्रीकेदारकल्पेईश्वरपार्वतीसंवादेतृतीयःपटलः॥३॥)

श्रीईश्वरउवाच ॥ ओंअतः परंप्रवक्ष्यामिकेदारस्यमहत्फलम् ॥ सारात्सारंसमुद्धृत्यक्षेत्रमेतत्कथंमया ॥ १ ॥ देवतानांयथामध्येप्रधानात्वंवरानने ॥ तद्वत्तीर्थेषुसर्वेषुकेदारोदकमुत्तमम् ॥ २ ॥ साधूनांचक्षमायद्वल्लवर्णभोजनंयथा ॥ तद्वत्सर्वेषुतीर्थेषुकेदारोदकमुत्तमम् ॥३॥ धेनूनांकामदुग्धावत्सर्वासामुत्तमोत्तमा ॥ तद्वत्सर्वेषुतीर्थेषुकेदारोदकमुत्तमम् ॥ ४ ॥ वेदानांसामवेदाश्चयथावैमुख्यउच्यते॥ तद्वत्सर्वेषुतीर्थेषुकेदारोदकमुत्तमम् ॥ ५ ॥ सर्वरत्नेषुवैसारंकौस्तुभंतुयथोत्तमम् ॥ तद्वत्सर्वेषुतीर्थेषुकेदारंपरिकीर्त्तितम् ॥ ६ ॥ घृतसारंयथादध्नः पुष्पात्सारंयथा मधु ॥ संक्षेपेणमयाप्रोक्तंकेदारसलिलंतथा ॥ ७ ॥ दक्षयज्ञेमहाभागेत्वंनिमित्ते नयेपुरा ॥ पूर्वंशप्तामयादेवितेभवन्तिगणेश्वराः ॥ ८ ॥ ( इतिश्रीकेदारकल्पे

उमामहेश्वरसंवादेचतुर्थः पटलः ॥ ४ ॥ ) श्रीदेव्युवाच ॥ ओंअप्राप्तास्तुगृहे
वापियत्रतत्रगताश्चवा ॥ येमृतादेवमुद्दिश्यश्रोतुमिच्छामितत्त्वतः ॥ १ ॥ पर्वतो
 पितुर्यैर्दृष्टोनैवपीतंतुतज्जलम् ॥ तेषांगतिःकादेवेशब्रूहितत्त्वेनशंकर ॥ २ ॥ श्री
ईश्वरउवाच ॥ श्रृणुदेवियथातथ्यंकेदारंतीर्थमुत्तमम् ॥ तत्रपीत्वातुमुच्यंतेजन्म
संसारबन्धनात् ॥ ३ ॥ अप्राप्तामांमृतायेचपथिदेशांतरेपिवा ॥ तेभवंतिगणा
देविममलोकेसुरेश्वरि ॥ ४ ॥ पर्वतेदृष्टमात्रेतुसर्वपापक्षयोभवेत् ॥ पीतमात्रेज
लेदेविगणोभवतिशूलभृत् ॥ ५ ॥ अवध्यः कामरूपीचसर्वभूताभयप्रदः ॥ ग
च्छन्तीश्वरलोकेषुहेमकुण्डलमंडितः ॥६॥ अन्यक्षेत्रेषुयत्पुण्यंकेदारेनतुतादृशम् ॥
अध्वराणांसहस्रेषुवृद्धिवृद्धिहितेषुच ॥ ७ ॥ नलभेन्तांगतिंमर्त्यःकेदारेणतुयांलभे 

त् ॥ जन्मांतरसहस्रेषुयत्फलंयज्ञयाजिनाम् ॥८॥ केदारोदकपानेनतत्फलंपरिकी
र्तितम्॥ त्रिकालंपरिभुंजानः क्रीडतेत्रिदशैरपि ॥ ९ ॥ केदारोदकपानेनयेभूमंति
सुयंत्रिताः॥ तेषुपुण्यफलंजन्मकृतार्थास्तेनरोत्तमाः ॥ १० ॥ विकर्माणिचरक्षंति
ममभक्तास्तुयेनराः ॥ यत्रतत्रगतावापिगाणपत्यफलंश्रियः ॥ ११ ॥ नकेदारात्प
रंगुह्यंरहस्यंपरमंपदम् ॥ देहिदत्ताभयंयच्चममालिंगाद्विनिःसृतः ॥१२॥ येपिबं
तिनरायुक्तामनःकृत्वासुयंत्रितम् ॥ तेपिगच्छंतिवैमुक्तिंसंसारभयबंधनात्॥ १३ ॥
पीतमात्रेणदेवेशियथामेवचनंभवेत् ॥ तथातस्यविशालाक्षिनभयंविद्यतेक्वचित् ॥
॥१४॥ स्वच्छंदगामिनोनित्यंरमंतेदैवतैः प्रिये ॥ देवदानवभूतेषुपूजनीयाःसमं
ततः ॥ १५ ॥ तीर्थमात्रमिदंगुह्यंतवदेविप्रकाशितम् ॥ अतः परंमहातीर्थंनभूतं

नभविष्यति ॥ १६ ॥ यथैवेक्षुरसोमध्येदध्नोघृतमिवोद्धृतम्॥सर्वलोकेहिश्रीर्यद्व
त्तत्तद्वत्केदारमुत्तमम् ॥ १७ ॥ तिलेषुतुयथातैलंपुष्पेषुचयथामधु ॥ तद्वत्केदार
तीर्थंचसर्वसारसमुच्चयम् ॥१८॥ मृतकेसूतकेचैवपचितंपापकर्मणा॥ रजस्वला
दिभिःस्पृष्टंभोजनंपरिवर्जयेत् ॥ १९ ॥ योनरक्षतिपापानिसर्वावस्थांगतोपिवा॥
मृत्युकालेवरारोहेगत्वागृह्णातितज्जलम् ॥ २० ॥ रक्षतेततःप्रयत्नेनपापकर्म्मा
णिभोजनम्॥तस्यरक्षामितंदेहंशुचिंसयतमानसम् ॥ २१ ॥ यस्तुरत्नवतींदद्या
त्सागरांतांवसुंधराम् ॥लभतेनगतिंतांतुकेदारेणतुयाभवेत् ॥ २२ ॥ केदारंतुपिवे
त्तोयंषण्मासान्स्तान्सुयंत्रितः॥तेनछिन्नंभवेद्देविसंसारभयबंधनम् ॥२३॥ भूमि
शायीब्रह्मचारीएकभक्तश्चातिष्ठति ॥ नित्यस्नायीविधानेनध्यायतेजपतेसदा ॥

॥ २४ ॥ अथवापिचषड्गात्र्यंशिवतीर्थेप्रकारयेत् ॥ तेनसर्वंकृतंदेविकृतकृत्येन
ननिश्चलम् ॥२५॥ दुष्प्राप्यंदेविकेदारंमानुषस्यवरानने ॥ येवृजंतिनरास्तत्रकृ
तज्ञास्तेनसंशयः ॥ २६ ॥ सर्वतीर्थेषुयत्पुण्यंसर्वयज्ञेषुसुंदरि ॥तदेकतःकृतंचैवके
दारंतुतथैकतः ॥२७॥ दृष्ट्वाचैवतुपीत्वातुगच्छंतिपरमांगातिम् ॥ एतत्तेकथितंस
र्वमाख्यातंवरवर्णिनि ॥ २८ ॥ तीर्थराजप्रभावस्तुमयातेसमुदाहृतः ॥ केदारस्य
तथाख्यानंस्वर्गारोहणमुत्तमम् ॥ २९ ॥ यइदंशृणुयान्नित्यंयश्चेदंपठतेनरः ॥ मु
च्यतेसर्वपापेभ्योरुद्रलोकंसगच्छति ॥ ३० ॥ ( इति श्रीकेदारकल्पेउमामहेश्व
रसंवादेपंचमःपटलः ॥ ५ ॥ ) श्रीईश्वरउवाच ॥ अतःपरंप्रवक्ष्यामिकेदारंफल
मुत्तमम् ॥ तत्पीत्वायद्भवेत्पुण्यंतन्मेनिगदतः शृणु ॥ १ ॥ एककालंद्विकालंवा

16

नित्यंकेदारचिंतकाः ॥ तेनपापेनलिप्यंतेपद्मपत्रमिवांभसा ॥ २ ॥ नकेदारात्प
रोमोक्षःस्वयंदेवेनभाषितम् ॥ पृथिव्यांयानिलिंगानिचासमुद्रसरांसिच॥ ३ ॥ के
दारस्यतुसर्वाणिकलांनार्हंतिषोडशीम् ॥ कामयेत्स्त्रीसहस्राणिपिबेत्केदारमुत्तमम्॥
॥ ४ ॥ पीतमात्रेजलंदेविकिमर्थंपरितप्यते ॥ ज्ञानशक्त्यापिसंस्पृष्टोलीयतेपर
मंपदम् ॥ ५ ॥ कालेवायदियाकालेकिंकरिष्यतितच्छृणु॥ जन्मांतरसहस्रेषुलक्ष
कोटिशतानिच ॥ ६ ॥ प्राप्नोतिधर्मयुक्तास्माशिवभक्तिंतुमानवः ॥ मासेतथाश्रा
वणेचशुक्लपक्षेचतुर्द्दशी ॥ ७ ॥ मध्यंदिनगतेसूर्येतदाशुष्यातितज्जलम् ॥ शु
ष्केवाजलरेखातुदृश्यतेचतुरंगुलम् ॥ ८ ॥ अर्द्धश्रोतः स्थितासाचमध्येत्रैशुक्लप
क्षके ॥ शिवरेतोजलंतत्रप्रत्यक्षंकुंडमध्यतः ॥ ९ ॥ आषाढेश्रावणेचैवकार्तिकेच

तथैवच ॥ त्रिभिर्मासैर्महापुण्यंकथितंतवसुव्रते ॥ १० ॥ स्नात्वामंदाकिनींपुण्यां
पितृभ्यः पिंडमात्रहेतु ॥ ईशानायततोगत्वाचार्चयित्वावृषध्वजम्॥ ११॥ स्थित्वा
कुण्डसमीपेचभावयुक्तेनचेतसा ॥ तंचरुंप्रापयेद्यस्तुशास्त्रदृष्टेनकर्मणा ॥ १२ ॥
पंचरत्नसमायुक्तंवहुमानसमन्वितम् ॥ उदकेनचसंमिश्रंयत्तत्पंचामृतंपरम् ॥१३॥
आचार्यः सर्वथाशास्त्रन्यासंकुर्य्याद्विधानतः ॥ दशाक्षरंपठेद्विद्यांपरमाक्षरसंयुता
म् ॥१४॥ तेनाभिमंत्रितंतोयंददातिज्ञानमुत्तमम् ॥ ज्ञात्वादेवंतथादेवींनंदीस्कं
दविनायकान् ॥ १५ ॥ जयांचविजयांचैवमोहिनींस्तंभिनींतथा ॥ ईशानाभिमु
खोभूत्वापिवेद्वामेनपाणिना ॥ १६ ॥ दक्षिणेनततः पीत्वापीतेनवृषभोयथा ॥
भूमिमागत्यजानुभ्यांहस्तयुग्मंप्रसार्यच ॥१७॥ इच्छामात्रंचवारान्स्त्रीन्स्त्रियांको

टांतुकारयेत् ॥ अहंब्रह्माप्यहंविष्णुरहंरुद्रस्तथैवच ॥ १८ ॥ इत्थंपीत्वानरायां
निविधिनापरमंपदम् ॥ ईशानंतुनमस्कृत्यकृतांजलिपुटेनतम् ॥१९॥ पीत्वातुल
भतेज्ञानंतीर्थज्ञानंपरंपदम् ॥ किमधीतैस्तपोदेवियज्ञैर्वाबहुदक्षिणैः ॥ २० ॥ किं
तप्तेनसुतपसाकिंव्रतेनजपेनवा ॥ किंचतीर्थाभिषेकेणकिंदाननमनेनच ॥ २१ ॥
पीत्वाकेदारमुदकंस्वच्छंदंक्रीडतेसदा ॥ तस्यदेशस्यमध्येतुपुरोभागेसगच्छति ॥
॥ २२ ॥ सोपिदेशोभवेत्पूतः किंपुनस्तस्यबांधवाः ॥ एतत्तेकथितोदेवीकेदारस्य
चसंभवः ॥ २३ ॥ शतेनयत्फलंतेनतत्सर्वंकथितंतव ॥ नामोघ्नन्तिनरादेविन
दैत्यानपिराक्षसाः ॥ २४ ॥ ननागानापिगंधर्वायक्षानैवतुकिन्नराः ॥ विद्याधरा
गणादेवियोगिनोप्सरसांगनाः ॥ २५ ॥ सिंहेनपालिताःसर्वेसप्तकोटिगणेश्वराः॥

तेषामाचमनार्थायदर्शितंतीर्थमुत्तमम् ॥ इतिश्रीकेदारकल्पे उमामहेश्वरसंवा
देषष्ठःपटल ॥ ६ ॥ श्रीदेव्युवाच ॥ ओंकीदृश्यपिचसाविद्याचाक्षराणिकतिप्र
भो ॥ आख्याहिदेवदेवस्यरहस्यंपरमंमहत् ॥१॥ श्रीईश्वरउवाच ॥ ओंकारद्वय
संयुक्तांक्षुंकारत्रयभूषिताम् ॥ रुंकारंपंचमोपेतांदशविंदुपरिप्लुताम् ॥२॥ ओंक्षुंरुं
क्षुंरुंरुंक्षुंरुंरुंओं ॥ अंगन्यासंप्रवक्ष्यामिशृणुदेवियथाविधि ॥ वामांगुष्ठदशारभ्य
न्यस्यतेतुदशांगुलम् ॥ ३ ॥ करन्यासस्त्वयाप्रोक्तश्चांगन्यासमतः शृणु ॥ ओं
शिखां ॥ रुंशिरं ॥ क्षुंनेत्रं ॥ रुंवक्रे ॥ क्षुंभ्रुवौ ॥ रुंबाह्वोः ॥ क्षुंजंघयोः ॥ रुंगु
ह्ये ॥ ओंपादयोः ॥ अंगन्यासस्त्वयाप्रोक्तोदिक्षुन्यासमिमंशृणु ॥ ४ ॥ ओंकारं
पूर्वदिग्भागेरुमाग्नेय्यांतथैवच ॥ क्षुंकारंदक्षिणेचैवरुंकारंनैर्ऋतेन्यसेत् ॥ ५ ॥

क्षुंकारंवारुणेचैवरुंकारंवायुगोचरे ॥ रुंकारमुत्तरेचैवक्षुमीशान्यान्तुविन्यसेत् ॥६॥
रुंकारंचाप्यधः क्षिप्यक्षिपेदोंकारमूर्द्ध्वतः॥दिक्षुन्यासोप्ययंप्रोक्तोयेनधर्मस्थितिर्भ
 वेत् ॥ ७ ॥ कुण्डन्यासंप्रवक्ष्यामियेवैकुर्वंतिसाधकाः ॥ ओंकारंकुण्डमध्येतुरुंका
रंपूर्वतोन्यसेत् ॥ ८ ॥ क्षुंकारंचाग्निदिग्भागेरुंकारंयाम्यतोन्यसेत् ॥ क्षुंकारंनैर्ऋ
तेन्यस्यरुंकारंवारुणेन्यसेत् ॥ ९ ॥ रुंकारंवायुकोणेतुक्षुंकारमुत्तरेन्यसेत् ॥ ईशा
नकोणेरुंकारमोंकारंव्यापकंन्यसेत् ॥ १० ॥ एतत्कृत्वाविधानंचकेदारसलिलं
पिबेत् ॥ कृष्णाष्टम्यांचतुर्दश्यामेवंविद्याभिमंत्रितम् ॥ ११ ॥ यः पिबेदुदकंदे
विकेदारसदृशोभवेत् ॥ सततंवापिबेद्देविविद्याहीनस्तुमानवः ॥ १२ ॥ विद्यायु
क्तोभवेद्देविनात्रकार्याविचारणा ॥ मुद्रिकांछत्रिकांचैवपादुकेतत्रदापयेत् ॥ १३ ॥ 

एतान्यन्यानिदत्वाचगांदद्याच्चपयस्विनीम् ॥ ताम्बूलंचविशेषेणततोदत्वाक्षमाप
येत् ॥ १४ ॥ त्वत्प्रसादात्कृतार्थोहंभवेज्जन्मनिजन्मनि ॥ दद्याच्छक्त्यानुसारे
णवित्तशाठ्यंनकारयेत् ॥ १५ ॥ तस्मिंस्तुष्टेप्यहंतुष्टोममतुल्योह्यसौमतः ॥
तस्मिन्दत्तंहुतंजप्तंसर्वंचाक्षयमादिशेत् ॥ १६ ॥ पश्चात्संपूजयेद्देविशिवंशक्ति
परायणम् ॥ एवंवन्देद्यथाशक्त्याप्रीयतांमेत्रिलोचनः ॥ १७ ॥ कुर्याद्वित्तानुसा
रेणशास्त्रदृष्टेनकर्मणा ॥ एतत्सर्वंयथान्यायंकथितंतवसुव्रते ॥ १८ ॥ केदार
स्यमहाख्यातंमद्भावपदमुत्तमम् ॥ यस्त्विदंपठतेनित्यंयश्चैवशृणुयादपि ॥ १९॥
मुच्यतेसर्वपापेभ्योरुद्रलोकंसगच्छति ॥ इतिश्रीकेदारकल्पे उमामहेश्वरसंवादे
सप्तमःपटलः ॥७॥ श्रीदेव्युवाच ॥ ओंअप्राप्ययेमृतादेवगृहान्निर्गत्यमानवाः॥

केदारंचनवैदृष्टंनचपीतंतुतज्जलम् ॥१॥ तेषांकास्याद्गतिर्देवश्रोतुमिच्छामितत्व
तः ॥ श्रीईश्वरउवाच ॥ अप्राप्तायेमृतादेविगृहांनिर्गत्यमानवाः ॥२॥ हृदयेचिं
तयकेदारंक्रोशमात्रंचयेगताः ॥ तेपिदेवानराः सर्वेभुंजन्तेपरमंपदम् ॥ ३ ॥ सं
सारेनोपपद्यंतेजन्ममृत्युविवर्जिताः ॥ त्रिनेत्रावृषभारूढायथाहंशंकरः स्वयम् ॥
॥ ४ ॥ गच्छन्तिरुद्रभवनंहेमकुंडलमंडिताः ॥ मद्विधास्तेगणाः सर्वेशशांककृत
शेखराः ॥ ५ ॥ यदासपश्यतेदेविमत्समानोनरोत्तमः ॥ तदासर्वाणिचिह्नानि
लक्ष्यंतस्यसुरेश्वरी ॥ ६ ॥ पूर्ववृत्तांकथांदेवितथाचकथयाम्यहम् ॥ कश्चिद्विप्रः
पुरादेविधनधान्यसमृद्धिमान् ॥ ७ ॥ तस्यपुत्रोमहाभक्तः चिन्तयेन्तुदिवानि
शम् ॥ केदारंहिगमिष्यामितच्चसंभाषतेसदा ॥ ८ ॥ नमन्यतेपितानैषातदा

माताविशेषतः ॥ हृदयेनैवकेदारंव्रजाम्येषामपश्यता ॥ ९ ॥ एतदप्यवदायात्रा
सगतोमनसागिरिम् ॥ ततः संसारभीतोसौप्रस्थितोरात्रिमध्यतः ॥१०॥ दृष्टोथ
कोटपालेनहतोवैतोमरेणच॥सोप्यदृष्टोप्यभिज्ञातस्तत्क्षणाद्ब्राह्मणीसुतः॥११॥तेन
भीतेनदेवेशितदोपायोविचिंतितः॥प्राकारस्यसमीपेतुचाश्ववीथ्यांहिपथ्यतः॥१२॥
स्थापितोसौतदाविप्रः कोटपालेनधीमता ॥ ततःप्रभातेविमलेपुत्रःसोत्रनदृश्यते
॥१३॥तत्रदुःखेनसंतप्तौब्राह्मणीब्राह्मणश्चतौ॥इतश्चेतश्चधावंतौनगृहाश्रमवीक्ष
कौ ॥ १४ ॥ पृच्छंतौपथितॉल्लोकान्पुत्रपुत्रेतिवादिनौ ॥स्मृत्वापुत्रस्यवाक्यंतुके
दारगमनेसदा ॥ १५ ॥ विप्रास्ताभ्यांविसृष्टाश्चपुत्रान्वेषणकारणात् ॥ पुत्रमा
नयताद्यैवयथादुः खंनलभ्यते ॥ १६ ॥ पृच्छंतस्तेतदाविप्राः केदारेचमहापथे ॥

नदृष्टोनश्रुतश्चायंनिराशास्तेनिवर्तिताः ॥ १७ ॥ संप्राप्यतेमोक्षमार्गः केदारो
न्वेषिभिर्जनैः ॥ सर्वेचस्वगृहंप्राप्ताः श्रूयतेयावताध्वनिः ॥ १८ ॥ तावत्कस्याभि
भूतस्यध्वनिर्दृष्ट्यैककंद्विजम् ॥ भूतउवाच ॥ कथयस्वमहाभागप्रेषितः केनकर्म
णा ॥ १९ ॥ विप्रउवाच ॥ प्रेषितोस्मिद्विजेनात्रकार्यंभूतस्ततः शृणु ॥ ब्राह्मण
स्यसुतोनष्टस्तस्यान्वेषणआगतः ॥२०॥ भूतउवाच॥कोदृष्टःकेनचैवात्रकस्यासौ
ब्राह्मणःसुतः ॥ विप्रउवाच ॥ नदृष्टोनश्रुतश्चैवमृतोवेश्मनिकुत्रसः ॥ २१ ॥
पुत्रउवाच ॥ स्वर्गेतिष्ठाम्यहंविप्रगणगंन्धर्वसेवितः॥रुद्रकन्यामहाभोगभागीचस
र्वसंस्थितः ॥ २२ ॥ अक्षयंचपदंप्राप्य केदारेहृदिसंस्थिते ॥ विप्रउवाच ॥ के
नकर्मविपाकेनसंप्राप्नोत्यक्षयंपदम् ॥ २३ ॥ पुत्रउवाच ॥ अहंकेदारमाश्रित्यप्र

स्थितोरात्रिमध्यतः ॥ दृष्टोस्मिकोटपालेनहतोस्मितोमरेणच ॥ २४ ॥ तत्क्षणा
न्मेगताः प्राणास्ततोरूपंप्रवर्त्तितम् ॥ ततोविमानमारुह्यद्वादशादित्यभास्वरम्॥
॥ २५ ॥ अप्सरोगणसंकीर्णंसर्वाभरणभूषितम् ॥ तेनकर्मविपाकेनसंप्राप्तोस्मि
शिवालयम्॥२६॥एकोत्तरकुलशतंसमस्तंतारितंमया॥मातरःपितरश्चैवतथास्वज
नबांधवाः ॥ २७ ॥ तथामत्पितरश्चान्यान्बंधून्वाक्यमुदीरयत् ॥ ममोपरियदि
स्नेहउद्वेगंमाकृतास्तथा ॥ २८ ॥ अत्रैवचमयादृष्टंयादृशंसत्रमेवतु ॥ अन्यंमा
तुश्चमेवाच्यंमादुः खंकुरुचांबिके ॥ २९ ॥ मयासमुपभोगार्थंसंप्राप्तंकामितंदि
वि ॥ मर्त्यभोगैर्नमेकार्यमेतत्सर्वंवदाम्यहम्॥विप्रउवाच ॥ ३० ॥ यदिपुत्रोस्य
विप्रस्यतन्मेसत्यंप्रकाशय ॥ ज्ञातिज्ञानंदर्शयत्वंयेनानिः संशयोभवेत् ॥ ३१ ॥

तदहंप्रत्ययिष्यामिपितरंतेसमंततः ॥ पुत्रउवाच ॥ नचेत्पिताविश्वसतितदाख्ये
योद्विजोत्तम ॥ ३२ ॥ अभिज्ञानंपुराभूतंममदेहसमुद्भवम् ॥३३॥ केदारंप्रस्थि
तोहंतुंनिशिमध्येयदाततः ॥ दृष्टोस्मिकोटपालेननिहतस्तोमरेणच ॥ ३४ ॥ दृ
ष्टोयावदहंतेनतदाविस्मयतेगताः ॥ निक्षिप्तः सहसाचैवप्राकारस्यसमीपतः
॥ ३५ ॥ अश्विनीविष्टमध्येतुभयसंचकितात्मना ॥ एतत्तेप्रत्ययंविप्रशीघ्रंदर्शय
मत्पितुः ॥ ३६ ॥ कुरुतेयेनसंस्कारमग्निदाहंहुताशने ॥ मदीयंकाथितंचैवह्यबध्य
पितुरेवच ॥ ३७ ॥ एवंपुत्रोगतःस्वर्गंकथयित्वायथार्थतः ॥ एकोत्तरशतंदेविमि
यापिसततंदिवि ॥ ३८ ॥ नानाविधान्महाभीमान्भुंक्तेहरपुरेमहत् ॥ ३९ ॥
( इति श्रीकेदारकल्पे उमामहेश्वरसंवादे अष्टमःपटलः ॥ ८ ॥ ) श्रीदेव्युवाच ॥

१९

ऒंयादिकोत्राप्यंजानातिशास्त्रमुक्तंयथाविधि ॥ अगम्यगमनंकुर्यात्तत्फलंवदशं
कर ॥ १ ॥ श्रीशंकरउवाच ॥ यत्तत्पृच्छसिदेवेशितत्सर्वंकथयामिते ॥कोंपिसर्वत्र
भुक्त्वातुब्राह्मणोज्ञानसंयुतः ॥२॥ सदैवममभक्तोहिध्यातासर्वगमीश्वरम्॥तेनवि
प्रेणसुश्रोणिसंसारभयभीरुणा ॥ ३ ॥ केदारगमनंकृत्वाह्यहंतुष्टोनसंशयः ॥
पुनश्चैवगृहंप्राप्तइष्टैः सहतुतिष्ठति ॥४॥ अध्यासौराजसदनंकदाचिच्चगतो
भवेत् ॥ आशीर्वादिपरोविप्रोदानलुब्धः पुनः पुनः ॥ ५ ॥ तेनदृष्ट्वाश्वपाकीच
मधुरध्वनिशोभिता ॥ तस्यगीतध्वनिंश्रुत्वासुस्वरंकर्णशीतलम् ॥६॥ मोहितोब्रा
ह्मणोदेविदृष्ट्वाम्लेच्छांसुरूपिताम् ॥ मूर्छितोऽचेतनस्तस्यादिग्भागंचनिरीक्षते
॥ ७ ॥ पुनरालोक्यतांसोपिकामांधः पतितोभुवि ॥ विसर्जितेचगीतांतेवंदेदेव

 गृहाद्गते ॥ ८ ॥ ब्राह्मणस्तेनमार्गेणगतोवैम्लेछमंदिरे ॥ म्लेछासाप्रार्थितातें 
नभार्याममभवस्वयम् ॥ ९ ॥ म्लेच्छोवाच ॥ दृश्यतेब्राह्मणंरूपंकुत्सितंतवभा
 षितम् ॥सर्ववर्णेमहाश्रेष्ठंसर्वशास्त्रविशारदम् ॥ १० ॥ भाषतोनिर्गुणंविप्रमहतां
लोमहर्षणम् ॥ नीचाहंसर्ववर्णानांवर्णानांब्राह्मणोगुरुः ॥ ११ ॥ प्रसंगोनैवकर्त्त
व्योम्लेच्छाहंब्राह्मणोभवान् ॥ ब्राह्मणउवाच॥ विवादोनैवकर्त्तव्यस्तस्मिन्कालेम
याप्रिये ॥ नदोषोजायतेतेहिसर्वः समायितिष्ठतु ॥ तेनसाकामलुब्धेनमधुराला
पवादिना ॥ १३ ॥ म्लेच्छावशीकृतातेनविप्रेणात्यग्रहेणतु ॥ गृहेवासोभवेत्तत्र
म्लेच्छयासहमोदते ॥ १४ ॥ तत्रास्यादुहिताजातासर्वलक्षणसंयुता ॥ यथा
प्राप्तवरासाचदृश्यतेचारुलोचना ॥ १५ ॥ सुप्रतिष्ठितपादास्यात्कूर्मपृष्ठसमान्न 

भा ॥ स्वरूपाचसुजंघाभ्यांकदलीस्तंभसन्निभा ॥ १६ ॥ क्षामोदरीसुकन्याचवि
स्तीर्णहृदयातथा ॥ चलत्प्रदक्षिणावर्त्तमध्यात्रिवलिसंयुता ॥ १७ ॥ स्तनद्वयसु
रूपाचबाहुभ्यामपिहस्तयोः ॥ मुखंपूर्णेंदुसंकाशंकामराजांबुजप्रभाम् ॥१८॥ तां
दृष्ट्वालोलनयनांसर्वलक्षणलक्षिताम् ॥विप्रस्यतस्यलुब्धस्यगतंजन्मतयासह ॥
॥ १९ ॥ ततःप्रभूतकालेनज्वरस्तस्याभवन्महान् ॥ अतिज्वरेणतप्तस्यमृत्युश्च
तदनंतरम् ॥ २० ॥ ततोविप्रायतायत्रम्लेच्छातद्भवनंययौ॥प्रणामंसाचकुरुते
म्लेच्छाविप्रस्यसन्निधौ ॥ २१ ॥ तवपुत्रोहिमेभर्ताज्वरेणगतजीवितः ॥ अग्नि
दाहंकुरुष्वास्ययदितेप्राणवल्लभः ॥ २२ ॥ विप्रउवाच ॥ नमेकार्यंसुतेनात्रत
थाचैवमतः शृणु ॥ चांडालकर्मतांयातः कर्मचांडालउच्यते ॥ २३ ॥ श्रीईश्व

23

रउवाच ॥ तच्छ्रुत्वासागतागेहंम्लेच्छाशोकभयार्दिता॥ गृहोपस्करणंत्यक्त्वातस्य
दाहंचकारह ॥ २४ ॥ स्वगृहेतुतयादग्धेधूमोजातः सुदारुणः ॥ तत्रवृ
क्षसमारूढांभूतानांशतपंचकम् ॥ २५ ॥ धूमेनचावृतोवृक्षोभूतैश्चसमधि
ष्ठितः॥स्वर्गलोकगताभूतावटवृक्षेणसंयुताः ॥ २६ ॥ क्रीडंतिचाक्षरंकालंरुद्रलो
कसमूहताः॥एकोभूतोगतोन्यत्रभोज्यलुब्धः स्वगोत्रतः ॥ २७ ॥ तत्रयावच्च
संप्राप्तोवटस्थानंनदृश्यते ॥ तदाविस्मयमापन्नंरुदंतंतंद्विजान्तावित् ॥ २८ ॥
कस्त्वंरोदिषिदुःखार्त्तोयत्रस्थानेवदस्वमे ॥ भूतउवाच ॥ किंत्वंपृच्छसिमेविप्रप
रित्राणं वित्राणांकुरुष्वमे ॥ २९ ॥ विप्रउवाच ॥ हेतुनाकेनभूतत्वंक्रंदसेदारुणंव
द ॥ भूतउवाच ॥ गतः केदारकंविप्रस्सोस्मिंस्थानेप्रतिष्ठतः ॥ ३० ॥

सोपिम्लेच्छासमायुक्तोगृहवासीसदास्थितः ॥ तस्यजातातथाकन्यास्वरूपाचसु
लक्षणा ॥ ३१ ॥ तस्यांतोपिगतोविप्रोगतंजन्मतयासह ॥ न्यग्रोधोयंगृहद्वारेभू
तानांशतपंचकम् ॥३२॥ आरुह्यसेवतेचैवम्लेच्छभूतंमहद्भृतम् ॥ तत्क्षणात्प्राप्त
मृत्युः सोप्यग्निदाहस्तयाकृतः ॥ ३३ ॥ तेनभूतगतः स्वर्गवटवृक्षेणसंयुतः ॥
अक्षयंचपदंप्राप्तस्तद्धूमेनद्विजोत्तमः ॥ ३४ ॥ अहंपापीदुराचारोप्यन्यकार्य
व्यवस्थितः ॥ तेनदुःखनसंप्राप्तोरुदामिचपुनःपुनः॥ ३५ ॥ विप्रउवाच ॥ य
दिकिंचित्प्रकर्त्तव्यंमयापृच्छाप्रसाधनम्॥कथयस्वमहाभूतयेनाहंप्रकरोमितत्।३६।
भूतउवाच॥यदिमेवचनंश्रौषीःक्रंदमानस्यदारुणम् ॥ मन्यसेविप्रयद्देवंसुमहत्पाप
हारकम् ॥३७॥ तत्क्षणात्कुरुविप्रेंद्रमित्रकार्येसुवत्सलम्॥ तस्यविप्रस्यचास्थीनिह्य

 ग्निदाहंपुनःकुरु॥३८॥येनमोक्षोभवेन्मह्यंतस्यधूमेनसुद्विज ॥ विप्रउवाच॥यदिमो 
क्षोभवेन्तुभ्यंशीघ्रंतत्प्रकरोम्यहम्॥३९॥ श्रीईश्वरउवाच॥तेनविप्रेणचतदादग्ध्वा
 स्थीनिहुताशने ॥ तद्धूमोविहितस्नेहपतितः सचभूतकः ॥ ४० ॥ पावकेतुप्र
ज्वलितेविप्रज्ञोगृहमध्यतः ॥ तत्क्षणाद्दिव्यदेहस्तुत्रिनेत्रश्चचतुर्भुजः ॥ ४१ ॥
कुंडलाभरणोभूत्वाशशांकधरएवच ॥ प्रणम्यहृष्टपुष्टात्माप्रोवाचगगनस्थितः ॥
॥४२॥ त्वत्प्रसादाद्द्विजश्रेष्ठस्वर्गंगच्छामिचाक्षयम्॥ तस्यभूतस्यरूपंहितत्क्षणा
त्तेनशिक्षितम् ॥ ४३ ॥ विप्रेणपतितः सोपितत्रमध्येहुताशने ॥ सोपिगच्छत्तदा
देवियत्राहंशंकरःस्वयम् ॥ ४४ ॥ अक्षयंचपदंप्राप्तोरुद्रत्वमनिवर्त्तकम् ॥४५॥
इति श्रीकेदारकल्पे ईश्वरपार्वतीसंवादे नवमः पटलः ॥ ९ ॥ श्रीदेव्युवाच ॥ 

तेनोदकेनपीतेनकिंचिद्दनंदेवजंभवेत् ॥ कथंमोक्षमपिज्ञानंचित्तसंवित्तिकारणम् ॥
॥ १ ॥ एतद्देवसमाख्याहिमानवानांहितायच ॥ श्रीईश्वरउवाच ॥ पीतमा
त्रेजलेदेविरोद्रंभवतिवैगणः ॥ २ ॥ गर्जतेबहुशब्देनमहोत्साहोगजेंद्रवत् ॥ याव
द्रुद्रविमानेनप्रयातित्रिदिवंजवात् ॥ ३ ॥ अप्सरोगणसंकीर्णोनानादिव्यसमावृ
तः ॥ गायंतितत्रगंधर्वानृत्यंतिगणनायकाः ॥ ४ ॥ महारागंप्रकुर्वंतिरुद्रकन्यास
मंततः ॥ तावत्त्वंचध्वनिंश्रुत्वादिगंतांस्तुनिरीक्ष्यच ॥ ५ ॥ क्षणात्पश्यतिसस्वर्गं
क्षणेनचनपश्यति ॥ सूक्ष्मगीतध्वनिंश्रुत्वाक्षणेनैवसपश्यति ॥ ६ ॥ आत्मानंसुभ
गांचित्तंपूज्यमानंमहेश्वरम् ॥ जटामुकुटधारीचचंद्रार्द्धेनविभूषितम् ॥७॥ त्र्यक्षश्च
तुर्भुजश्चैवकुंडलद्योतिताननः ॥ श्रीदेव्युवाच ॥ तस्यसंभवतेलिंगंकथंचैवसपश्य

ति ॥ ८ ॥ एतन्मेसंशयंदेवकथयस्वमहेश्वरः ॥ श्रीईश्वरउवाच ॥ शृणुदेविक
थांदिव्यांवृत्तांसंसारमध्यतः ॥ ९ ॥ कुलेमहतिविप्रस्यदुहिताभूत्पतिव्रता ॥ का
लेनविहितासाचविधवापूर्वकर्मणा ॥१०॥ तदासाचिंतयत्कामंकेदारगमनंप्रति ॥
यास्याम्यहंचकेदारंशीघ्रमन्वेषणायच ॥ ११ ॥ तयाभक्त्यातदासाचगतावैहिम
पर्वतः ॥ दृष्ट्वाचैवतुकेदारमीशानममराधिपम् ॥ १२ ॥ रेतोवारिततः पीत्वा
पुनरेवागतागृहम् ॥ आमंत्रयित्वाविप्रांश्चमद्भक्तांश्चतपोधनात् ॥ १३ ॥ कौ
मारंयौवनेकृत्वाभ्रातृभिः स्वजनैर्वृताः ॥ प्रभावाविनिवृत्त्यैवदानंदत्वाक्षमापये
त् ॥ १४ ॥ तावत्साधर्मसंयुक्तावृत्तंनियममाचरेत ॥ यावत्तस्यास्तदाभ्राताचकार
कलहंप्रिये ॥ १५ ॥ महद्भिर्दुष्टवचनैर्देवदूषणतत्परैः ॥ यादृशीतादृशीत्वंहिकेदा

रगमनेरता ॥ १६ ॥ हृदयेसंभवेगर्भौलिंगनेहृत्कयाश्रुतम् ॥ श्रुत्वैतच्छ्लोकसंप्रा
प्तादुःखंकृत्वाप्यहर्निशम् ॥ १७ ॥ केदारंहृदयेचिंत्यकिमेवमुदकात्फलम् ॥ शो
चंतियावदेवंसानिद्रांभवातितत्क्षणात् ॥ १८ ॥ तावत्पश्यंतिदेवंचजटामुकुटधारि
णम् ॥ देवतादर्शनंदृष्ट्वाब्राह्मणीप्रणमेक्षितौ ॥ १९ ॥ पादलग्नाचरुदतिदेव
देवेमहेश्वरे ॥ किमर्थंतुजलंपीतंमात्रामेतवभाषितम् ॥ २० ॥ एतत्कथयदेवेश
त्वद्यात्राकिंहिनिष्फला ॥ श्रीकेदारउवाच ॥ माशोचस्वमहाविप्रसफलंजन्मत
स्तव ॥२१॥ तद्धृदिप्रभवंलिंगंकुंडमात्रंप्रसादतः ॥ प्रभातेविमलेसत्येचाहूया
स्यसहोदरम् ॥ २२ ॥ अपरेषांतयाग्रेचगोदोहंपिबसुन्दरी ॥ अंगुलींचमुखेदत्वा
छर्दिकृत्वाचतत्क्षणात् ॥ २३ ॥ तन्मध्येचमहालिंगंपश्यकुंडसमप्रभम् ॥ पश्यं

 



तिसर्वलोकाश्चप्रत्ययोजायतेध्रुवम् ॥ २४ ॥ श्रीईश्वरउवाच ॥ प्रभातेचेदृशंक
र्मसर्वलोकैर्विलोकितम् ॥ लिंगभेदंभयाद्भीताब्राह्मणीचतदाभवेत् ॥ २५ ॥ हा
हाकारः कृतः सर्वैर्द्विजैर्भ्रान्तैर्विनिश्चतैः ॥ पापिष्ठाभ्रातरोह्येतेदुर्मदाः कुलपांस
नाः ॥ २६ ॥ भगिनीनिंदिकामूढादेवताप्रभुहर्षकाः ॥ येषामेवंमहाघोरोप्यवीचि
र्नरकार्णवः ॥ २७ ॥ लिंगभेदेनतेसर्वेभगिनीछद्मकारकाः ॥ ततः साब्राह्मणी
विप्रैरुक्तालिंगत्वमाहर ॥ २८ ॥ गोदोहमन्यंचपिबयेनेदंसनिवर्त्तयेत् ॥ दुग्धेक्षि
प्त्वाथतत्पीतंब्राह्मण्यातद्वचःकृतम् ॥ २९ ॥ संतोष्यब्राह्मणान्प्रीत्याप्राप्ता
तत्परमंपदम् ॥ अहंपापीदुराचारः प्रायेणात्मविशुद्धये ॥ ३० ॥ इतिभ्राताब्र
वीत्तस्यैप्रायेणात्मविशुद्धये ॥ तदानिष्पादितंविप्रतस्यपापस्यशोधनम् ॥ ३१ ॥

महत्कृच्छ्रंत्रिरात्राणिपरमानशनोदकम् ॥ एतत्तेकथितंदेविलिंगमाहात्म्यमुत्तमम् ॥
॥ ३२ ॥ ( इतिश्रीकेदारकल्पे उमामहेश्वरसंवादे लिंगमाहात्म्यवर्णनोनामदश
मः पटलः ॥ १० ॥ ) कार्तिकेयउवाच ॥ ओंअहं पृच्छाकरोदेवसाधकानांहिताय
च ॥ महापथेचपश्यंतिकिंचिच्छक्तिंचमानवाः ॥ १ ॥ तस्यार्थेचफलंब्रूहिसत्यंदे
वसदाशिव ॥ गच्छंतिसाधकाः सर्वेस्वयंदेहेनशंकर ॥ २ ॥ श्रीईश्वरउवाच ॥
मनसाकर्मणावाचास्वप्तजन्मनिकिल्बिषम् ॥ विनश्यंतिकृतंतेषांयेशृण्वंतिमहापथ
म् ॥ ३ ॥ महापथपरोधर्मः त्रिषुलोकेषुविश्रुतः ॥ उच्यतेयदिलोकानांगतीनांप
रमागतिः ॥ ४ ॥ पंथमध्येमहापंथंपंथानांपंथमुत्तमम् ॥ पंथानांचैवसर्वेषांमहा
ज्ञानंसमुत्तमम् ॥ ५ ॥ दुर्लभंदेवतानांचदुर्लभंचेतरेजनाः ॥ दुर्लभंगणगंधर्वोय

श्वशास्त्रंवदाम्यहम् ॥ ६ ॥ रम्यंचदिव्यशास्त्रेषुभुक्तिमुक्तिप्रदायकम् ॥ श्रु
त्वाविघ्नाविनश्यंतिपापानिसकलानिच ॥ ७ ॥ श्रुत्वाचपठितैश्चैवशिवकल्पोम
हापथे ॥ पदेपदेमहापुण्यंगंगास्नानफलंलभेत् ॥८॥ येचांधामानुषास्तेननपश्यं
तिमहापथम् ॥ पश्यंतियोनिमार्गेतुजनाःपापेनमोहिताः ॥९॥ मानुषाश्चमहासे
नपापंकृत्वामनोरमे ॥ केदारदृष्टिमात्रेणपापराशिर्विनश्यति ॥ १० ॥ यत्रतिष्ठं
तिकल्पंचतत्रातिष्ठंतिदेवताः ॥ अष्टषष्ट्याश्चतीर्थानिख्यातानिभुवनत्रये ॥ ११ ॥
ब्रह्मविष्णुमहेशानांसुरेंद्रस्त्रिदशांपतिः ॥ देवतासहितस्तत्रइंद्रास्तिष्ठतिनित्यशः
॥ १२ ॥ स्वर्गेमृत्यौचपातालेग्रहनक्षत्रतारकाः ॥ यत्रतिष्ठतिकल्पस्तुसर्वेतिष्ठं
तितत्रवै ॥ १३ ॥ पवित्रंवैसदाकल्पंयेशृण्वंतिपठंतिच ॥ राजद्वारेमहाद्वारेभयंत

त्रनविद्यते ॥ १४ ॥ पवित्रंवैमहत्पुण्यंयत्रकल्पोमहापथः ॥ सदेशीरुद्रतुल्योवैवि
शेषोयस्यमंदिरे ॥ १५ ॥ गृहेयेतुसदाकल्पंयेशृण्वंतिपठंतिच ॥ घोरसंकटआर
ण्येनभयंविद्यतेक्वचित् ॥ १६ ॥ वाराणस्यांकुरुक्षेत्रेप्रयागेचगयासह ॥ यत्फलं
प्राप्यतेतेनतत्फलंप्रतिपूजनात् ॥१७॥ वसंतितानितीर्थानिगृहेयस्यमहापथम् ॥
महापंथंमहाकल्पंतेलभंतिगृहेस्थिताः ॥ १८ ॥ पूर्वजैःसहितास्तेनअंतेयांतिशि
वालयम् ॥ नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि ॥१९॥ शंकरस्यप्रसादेनविष्णो
श्चैवविशेषतः ॥ गच्छंतिशिवसान्निध्येभुंजंतिविपुलांश्रियम्॥२०॥तेषांतुष्टोमहा
देवउमासार्द्धंत्रिलोचनम् ॥ तेलभंतिमहाकल्पंदेवदानवदुर्लभम् ॥२१॥ विनारुद्र
प्रसादेननलभंतिमहापथम्॥ एतत्तेचमहासेनसत्यंसत्यंवदाम्यहम् ॥२२॥ यस्मि

न्नेवपुरापूर्वेंअर्चयित्वामहेश्वरम् ॥ राज्यंस्वर्गंचमोक्षंतुतेलभंतियुगेयुगे ॥ २३ ॥
महींचैवपूरेहंतिविल्ववृक्षंतृणानिच ॥ चतुराशीतिलक्षाणांअभ्रच्छायागृहेतथा ॥

॥ २४ ॥ तेषांसंख्यांचजानामिनेहपुण्यंवदाम्यहम् ॥ हेममंदिरसंकाशाः प्रासा
दाः शिवशासने ॥ २५ ॥ तेषांसंख्यांचजानामिनेहपुण्यंवदाम्यहम् ॥ आकाशे
पतितंतोयंपृथिव्यांपरितिष्ठति ॥ २६ ॥ तेषांसंख्यांचजानामिनेहपुण्यंवदाम्यह
म् ॥ चतुराशीतिलक्ष्याणितारकाणांचविस्तृतम् ॥ २७ ॥ तेषांसंख्यांचजाना
मिनेहपुण्यंवदाम्यहम् ॥ सागरेचमहासेनअनिलंविपुलंमतम् ॥ २८ ॥ तेषांसं
ख्यांचजानामिनेहपुण्यंवदाम्यहम् ॥ नरानार्यश्चयत्रोर्व्याः तिष्ठंतिचगृहेगृहे ॥
॥ २९ ॥ तेषांसंख्यांचजानामिनेहपुण्यंवदाम्यहम् ॥ सर्वभूताश्चातिष्ठंतिसंस्थिता

भुवनत्रये ॥ ३० ॥ तेषांसंख्यांचजानामिनेहपुण्यंवदाम्यहम् ॥
महापथंमहापुण्यंमहारुद्रंभयंकरम् ॥ ३१ ॥ स्वामिन्पंथेचकल्पे
चदर्शनेचमहाशुभम् ॥ तेनमार्गेणगंतव्यमभेदोदेवदुर्ल्लभम् ॥ ३२ ॥ भयंशं
कानकर्त्तव्यागंतव्यंचहिमालयम्॥महापंथेमहासेनाविघ्नंनास्तिकदाचन ॥ ३३ ॥
तस्यकल्पप्रसादेनसत्यंसत्यंवदाम्यहम् ॥ श्रीमहादेवउवाच ॥ स्वर्गसोपानमार्गो
ऽसौमयाताविनिर्मितः ॥ ३४ ॥ मानुषानैवपश्यंतिसंसारेकिमुपार्ज्जितम् ॥ श्री
ईश्वरउवाच ॥ ब्रह्मघ्नोगोहनश्चैवमातृपित्रोश्चघातकः ॥ ३५ ॥ बालोवृद्धो
यौवनस्थोहीनसत्यश्चवाऽऽलसी॥अगम्यागमनंपापंवेदशास्त्रविवर्ज्जितम् ॥३६॥
कल्पेकल्पेभवेत्तस्यसर्वार्थोयस्यासिध्यति ॥ जन्मांतरसहस्रेणक्रियतेपापकर्मयत् ॥

॥ ३७ ॥ केदारमुदकंपातुंभस्मराशीर्नसंशयः ॥ संसारेमानवामध्येपापजंपरमार्जि
तम्॥३८॥कल्पंपश्यतिनेत्रेणतेयांतिशिवसन्निधौ॥ यत्कृतंचमहाकल्पंसाधकानांहि
तायच ॥ ३९ ॥ संसारेयेनराः सर्वेमोहिताःकर्मबंधनैः ॥ केदारंयेनजानंतिवृथा
जन्मतुमानवाः ॥ ४० ॥ संसारसागरेघोरेदुस्तरंनरकार्णवम् ॥ उत्तीर्णसर्वलोका
नांमृत्युलोकेचतारितम् ॥ ४२ ॥ जलेचबुद्बुदाकारंतावत्संसारिणोभवेत् ॥ अ
भ्रच्छायायथासेनतथासंसारिणोजनाः ॥ ४३ ॥ जलमध्येयथामत्स्याहिमजालैश्च
रुंधिताः ॥ बंधपाशकयामोहंनैवगच्छंतिमत्पुरे ॥ ४४ ॥ महापंथंमहाशास्त्रंदेव
दानवदुर्ल्लभम् ॥ स्वर्गशास्त्रमहारम्यंसर्वपापप्रणाशनम् ॥ ४५ ॥ प्रसादंमंदि
रंछत्रंशिवस्यपरिधारयेत् ॥ तस्यरुद्रपदेवासोयावदिंद्राश्चतुर्दश ॥ ४६ ॥ तस्य

कल्पप्रसादेनयावदिंद्राश्चतुर्दश ॥ संवत्सरकृतंपापंमुच्यतेनात्रसंशयः ॥ ४७ ॥
केदारंचमहानामयेजपंतिगृहेतथा ॥ इहजन्मकृतंपापंमुच्यतेनात्रसंशयः ॥४८॥
मनसाध्यायतेलोकागच्छंतिचहिमालयम् ॥ सप्तजन्मकृतंपापंतेनपश्यंतितत्क्ष
णात् ॥ ४९ ॥ केदारगमनंचैववाचयंतिवदंतिच ॥ रविदिव्यप्रकाशेनगच्छंतिशि
वशासने ॥ ५० ॥ कर्मणांचमहासेनगताकेदारशासने ॥ केवलंदर्शनंदृष्ट्वाद्वारे
चैयपिबंतिच ॥५१॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ पितृभिः सहिता
स्तत्रगच्छंतिशिवशासने ॥ ५२ ॥ यत्रस्थानेसुराःसर्वेभुजंतिविपुलांश्रियम् ॥ व
संतिमानुषामूढागर्भवासोदिनेदिने ॥ ५३ ॥ केदारंनैवपश्यंतिसंसारेनिष्फलाग
ताः ॥ अज्ञानानैवपश्यंतिगर्भवासोदिनेदिने ॥ ५४ ॥ कथयामिशृणुवाचंयेकुर्वं

तिशिवालयम् ॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ ५५ ॥ पितृभिःस
हितास्तेऽपियांतियांतिशिवालयम् ॥ स्थापितेचमहालिंगेशृणुतस्यापितत्फलम् ॥
॥ ५६ ॥ यावद्भूरचलोमेरुर्यावत्स्वर्गेसुरोत्तमाः ॥ भावभक्तिसमायुक्तंमंत्रशास्त्रं
यथात्मनः ॥ ५७ ॥ पितृभिःसहितास्तेपिशिवलोकेवसंतिच ॥ सर्वधर्मांश्चयेप्रा
णांआतिथ्यंगुरुसेवनम् ॥ ५८ ॥ एकचित्तरतानित्यंतत्फलंशृणुशांतव ॥ चंद्रा
र्कंगगनेयावत्ग्रहनक्षत्रसंयुतम् ॥ ५९ ॥ यावत्स्वर्गेमहादेवयावन्नीरंतुसागरे ॥
सर्वदेवसमाः सिद्धाभुंजंतेविपुलांश्रियम् ॥६०॥ भुक्त्वाचविपुलान्भोगाँल्लभते
चजयंगतिम् ॥ शंकरस्यप्रसादेनसरुद्रोगणपोभवेत् ॥ ६१ ॥ इच्छाभोगाभवेत्त
स्यभुजंतिविपुलांश्रियम् ॥ अमृतंचपरित्यज्यविषंचैवपिबंतिच ॥ ६२ ॥ कौतूह

लंमयादृष्ट्वाक्षीरंत्यक्त्वाविषंपिबेत् ॥ सागरेचयथानावंसंसारंकल्पसंस्थितम् ॥
॥ ६३ ॥ निर्मितावैमहासेनमानुष्योत्तरणायच ॥ नपश्यंतिपथंदिव्यंमायामोहम
माकुलम् ॥ ६४ ॥ तृष्णाकामंतुमंभूत्वाक्रोधपापेप्रपूरिता ॥ एतैर्दोषैः सु
सहितः कामांधोमानुषोभवेत् ॥ ६५ ॥ स्थानंतत्रनपश्यन्तिपथंदिव्यं
महापथम् ॥ योनिमार्गेसहस्रेषुअधमोत्तममध्यमाः ॥ ६६ ॥ गच्छं
तिमानुषाः सर्वेनैवगच्छंतिमत्पुरे ॥ गृहेद्वारेयथासत्यागच्छंतिचमहापथम् ॥
॥ ६७ ॥ उद्र्ध्वस्थानेतुजायंतेयत्रदेवोमहेश्वरः ॥ एवंरम्यंमहाशास्त्रंत्रिषुलोके
षुदुर्ल्लभम् ॥ ६८ ॥ स्वर्गशास्त्रंमहारम्यंदृष्ट्वास्कंदोब्रवीमिते ॥ स्कंदउवाच ॥
पुनः पृच्छाम्यहंदेवकरोतिशृणुशंकर ॥ ६९ ॥ पुरापन्थंचपश्यंतिसाधकानांहित

31

केदार यच ॥ कैलासपीठमध्येतुयोगगम्येमहेश्वरम् ॥ ७० ॥ ब्रह्माविष्णुसुराः सर्वेसिं कल्प
द्धविद्याधरोऽसुराः ॥ एवंसमीहितंदृष्ट्वास्कंदोवचनमब्रवीत् ॥ ७१ ॥ महापंथं ११
२६ कथंदेवक्वस्थानेचयथाश्रमम् ॥ येनगच्छंतिवैसिद्धाः संसारभयपीडिताः ॥७२॥
कार्तिकेयउवाच ॥ ब्रूहिवाक्यंमहादेवत्रिदशैः सुरपूजिताः ॥ स्वयंदेहेनदेवस्यस्व
र्गेगच्छंतिसाधकाः ॥ ७३ ॥ ( इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादेएकादशः
पटलः ॥ ११ ॥ ) श्रीईश्वरउवाच ॥ ओंशृणुस्कंदमहाप्राज्ञ एकचित्तमहामुने॥
गच्छंतिशिवसान्निध्यंमहायोगामहातपाः ॥ १ ॥ निर्भयंनमहापंथंगंतव्यंचहिमा १२
लये ॥ अघोरेणचमंत्रेणअष्टषष्ट्यादिनिर्मितम् ॥ २ ॥ अथोरायमहामंत्रोमहा
सिद्धिकरंनृणाम् ॥ महाविघ्नहरंनित्यमहापंथप्रदायकम् ॥ ३ ॥ आश्विनेचैवमा २६

सेचगंतव्यंचमहापथम् ॥ प्रथमंतत्रगंतव्यंललितायत्रातिष्ठति ॥ ४ ॥ स्नात्वामं
दाकिनीतीर्थेउपवासंकरोतिच ॥ मंदाकिनीसंगमेषुह्येकरात्रौचजागरम् ॥ ५ ॥
महारुद्रप्रसादेनप्राप्नोतिपंचमुत्तमम् ॥ भद्रेश्वरमहातीर्थंदृष्ट्वाहरतिपातकम् ॥
॥ ६ ॥ केशत्यागंचकर्तव्यंतत्रस्थानेमहाबुधैः ॥ मालाधरंचगंतव्यंस्नात्वामंदा
किनीजलम् ॥७॥ लोकंदृष्ट्वातुमार्गेणगंतव्यमुत्तरांदिशम् ॥ विघ्नेश्वरप्रसादे
नगुरुधर्मबलेनच ॥ ८ ॥ प्रथमंतत्रगंतव्यंकेदारंप्रथमाश्रमम् ॥ संप्राप्यतत्र
स्थानेचकेदारंपरमेश्वरम् ॥ ९ ॥ तर्पयेत्पितृभिस्तत्रहंसतीर्थेषुसाधकः ॥ पूज
यित्वामहाभक्त्याकेदारंपरमेश्वरम् ॥ १० ॥ सप्तकोटिसहस्राणिरक्षंतिगणमुत्त
मम् ॥ मनुष्याणांहितार्थायस्वयंदेहेननिर्मितम् ॥ ११ ॥ देवदानवदैत्याश्चयक्ष

राक्षसकिंनराः ॥ नलभंतेजलंस्कंदयेचान्येपापकारिणः ॥ १२ ॥ पितृदेवगणाः
सर्वैस्नात्वामंदाकिनीजले ॥ भक्षयेच्चलभेत्स्कंदयेचान्येपापकारिणः ॥ १३ ॥
तुष्टावरंप्रयच्छंतिप्राप्तास्तांपरमांगतिम्॥ देवस्यदक्षिणेपार्श्वेरेतःकुंडंव्यवस्थितम्
॥ १४ ॥ इहजन्मकृतंपापंदृष्टमात्रेविनश्यति ॥ दर्शनंरेतकुंडस्यसप्तजन्मकृतंद
हेत् ॥ १५ ॥ यानिकानिचतीर्थानिविख्यातानिमहीतले ॥ रेतःकुंडस्थितेसर्वेक
लांनार्हंतिषोडशीम् ॥ १६ ॥ वामहस्तेनतत्पूर्वंत्रिवारंतुपिबेज्जलम् ॥ दक्षिणेच
त्रिवारंतुपावितोयंजलांजलिम् ॥ १७ ॥ गोमुखंतत्रपीत्वाचत्रिनेत्रोजायतेनरः ॥
जलंचकंठगंतव्यंलिंगंभवतिदेहिनाम् ॥ १८ ॥ तृणाग्रेविंदुमात्रेणब्रह्मसूत्रेणसं
स्थितम् ॥ मृत्युलोकेचसंप्राप्तस्त्रिनेत्रोजायतेनरः ॥ १९ ॥ कार्तिकेयउवाच ॥

रेतोविद्यामहादेवकथयस्वप्रकाशितम्॥कतिमात्राः कत्यक्षराः कतिमंत्राःप्रकीर्तिताः
॥ २० ॥ श्रीईश्वरउवाच ॥ ओंकारद्वयसंयुक्तांक्षुंकारत्रयभूषिताम् ॥ रुंकारंपंच
संयुक्तांदशविन्दुप्रपूरिताम् ॥ २१ ॥ ओंक्षुंक्षुंक्षुंरुंरुंरुंरुंरुं ॥ ओंकारंचस्वयंब्रह्मरुं
कारंविष्णुरुच्यते ॥ क्षुंकारंचशिवप्रोक्तंदशविन्दुसमाश्रिता ॥ २२ ॥ रेतोविद्याम
हासेनममदेहेषुनिर्मिता ॥ शृणुस्कन्दमहाप्राज्ञ सत्यंसत्यंवदाम्यहम्॥ २३ ॥
यत्रतत्रपिबेत्तोयमेवंचरेतोविद्यया ॥ केदारदशगुणंपुण्यंलभतेनात्रसंशयः ॥
॥ २४ ॥ नवेभांडेमहासेनरेतोविद्याभिमंत्रितम् ॥ सप्तधान्यंगृहीत्वाचगंतव्यमु
त्तरांदिशम् ॥ २५ ॥ नवेभांडेकरेग्राह्यमुदकमध्येप्रक्षालनम् ॥ उत्तराभिमुखेचैव
रेतोविद्याभिमंत्रितम् ॥ २६ ॥ तत्रतिष्ठतिसादेविगौरीनाम्नीमहातप ॥ देवाये

33

तुलयंचैवरेतोविद्याभिमंत्रितम् ॥ २७॥ गृहीत्वागम्यतेतत्रह्यपामार्गस्यतंदुलम्॥
अपामार्गस्याभावेनशालिमेकंचतंदुलम् ॥ २८ ॥ सामाहिसाधिकातत्र अघोरेणा
३१ भिमंत्रितम् ॥ यंरंलंवंहं ॥ शोधयित्वाचरुंतत्रअघोरेणाभिमंत्रितम् ॥ २९ ॥ पं
चब्रह्मसमायुक्तंचरुंयत्नेनसाधयेत् ॥ तच्चरुंतत्रकर्त्तव्यंचतुर्भागंतुकारयेत् ॥
॥ ३० ॥ ब्रह्ममंत्रंभवेत्पुण्यंपथंददातिनिर्मलम् ॥ प्रथमंदैवदातव्यंद्वितीयंब्रह्मणे
वच ॥ ३१ ॥ तृतीयंचापिगौर्याया: चतुर्थेआत्मतर्पणम् ॥ प्रसादित्वाचरुंसर्वैप्रा
प्यतेचपदेरसम्॥३२॥पश्चाच्चभोजनंकृत्वास्वयमेवमहात्मनाम्॥पश्यंतिशिवगौरी
भ्यांस्तुतिंकृत्वाप्रयत्नतः ॥ ३३ ॥ स्वस्तिकंतत्रगौर्याग्रेकर्त्तव्यमात्मतर्पणम् ॥
अचिंत्यरूपचरितेपरमादिव्यरूपिणी ॥ ३४ ॥ त्वंमातासर्वलोकानांक्षंतव्यंपरमे ३१

श्वरी ॥ संसारभयभीतानांपंथंदेहिसुखंप्रति ॥ ३५ ॥ तस्यादेव्याः प्रसादेनप्रा
प्नोतिपंथमुत्तमम् ॥ नमस्कारंशिवंकृत्वागुरुंदेवंनमाम्यहम् ॥ ३६ ॥ गौरीईशा
नभागेनगंतव्यमुत्तरांदिशम् ॥ गोमात्रेणपथंयत्रदृश्यतेनिर्मलंततः ॥ ३७ ॥ प्र
माणंतस्यमार्गस्यद्वात्रिंशांगुलविस्तरम् ॥ दर्शितंशंभुनामार्गंसिद्धानांसर्वकांक्षिणा
म् ॥ ३८ ॥ एतस्यत्रिविधोवर्णः श्वेतःकृष्णस्तुपीतकः ॥ मध्येचैवभवेत्पीतइति
शास्त्रस्यनिश्चयः ॥ ३९ ॥ धन्वंतरंशतंतेचयत्रचिह्नंप्रदृश्यते ॥ अर्द्धचंद्रकृता
श्चैवशिलास्तिष्ठंतिषण्मुख ॥ ४० ॥ तस्याःप्रदक्षिणांकृत्वागंतव्यमुत्तरांदिश
म् ॥ धन्वंतरंशतंत्रीणिआत्मनश्चैवगम्यते ॥ ४१ ॥ लिंगंहेमंवधोनामस्थितं
तत्रैवदृश्यते ॥ श्वेतरक्तपीतकृष्णंतस्यवर्णंचलक्षते ॥ ४२ ॥ आत्महस्तेनतंलिं

गंदृष्टिमात्मविलेपनम् ॥ अघोरेणैवमंत्रेणआत्मरक्षांतुकारयेत् ॥ ४३ ॥ ( इति श्रीकेदारकल्पे ईश्वरकार्तिकसंवादेस्वर्गगमनविधिवर्णनोनामद्वादशः पटलः ॥ ॥ १२ ॥ ) श्रीईश्वरउवाच ॥ ओंहुंफट्स्वाहा ॥ जपमंत्रः ॥ प्रथमंजपित्वामंत्रं पश्यंतंचअलिंगता ॥ शृणुस्कंदमहाप्राज्ञवजूंभवतिदेहिनाम् ॥ १ ॥ अघोराय महामंत्रंमहाविघ्नंप्रणश्यति ॥ षडंगमंत्रमहामंत्रंदेवदानवदुर्लभम् ॥ २ ॥ सत्यंलिंगप्रभावेनहेमेनैवतुवध्यते ॥ धन्वंतरंशतंत्रीणिएकचित्तंजपेत्पुनः ॥ ३ ॥ तत्रास्तेचपुरीसर्वेदृश्यंतेपूरनेकधा ॥ तत्रहेमप्रभादीप्तंदृश्यतेउत्तरामुखम् ॥४॥ दृष्ट्वाशंखपुरीञ्चैवत्रह्माविष्णुपुरींस्तथा ॥ सूर्यकोटिसमंतेजा दृश्यतेउत्तरामुखम् ॥ ५ ॥ इन्द्रनीलैर्महानीलैः पद्मरागैः सुशोभितम् ॥ तत्रशंकरपूजायां

कैलासशिखरालये ॥ ६ मनोहरंचदिव्याढ्यंमंगलादपिमंगलम् ॥ नृत्यैः सहस
माकीर्णैः प्रासादैश्चमहाकुलम्॥ ७ ॥ एकविंशतिसंख्याश्चपुरीस्तत्रमनोरमाः॥
दृश्यतेचमहासेनदृश्यतेचमहापथम् ॥ ८ ॥ पंचादिसाधकाः सर्वेगंतव्यमुत्तरां
दिशम् ॥ नदीचदृश्यतेस्वर्गेआगताचसरस्वती ॥ ९ ॥ हंसकारंडसंकीर्णैश्चक्र
वाकोपशोभितम् ॥ नानाद्रुमलताकीर्णैर्नानापक्षिसमाकुलम् ॥ १० ॥ कुमुदोत्प
लपद्मैश्चशोभितंसरमुत्तमम् ॥ हरंतिसर्वपापानिसप्तजन्मार्जितानिवै ॥११॥
तस्मिस्थानेपिबेत्तोयंपूजयित्वातुशंकरम् ॥ पितृवंशगताः स्वर्गेमातृवंशास्तथैव
च ॥ १२ ॥ शुद्धवंशागताः स्वर्गेउत्तराभिमुखेगताः ॥ योजनार्द्धंततोगत्वाआ
श्रमंदृश्यतेमहत् ॥ १३ ॥ शक्रेणस्थापितंलिंगंपिंडिकादेहमंडितम् ॥ योजनार्द्धं

चविस्तीर्णापुरीशक्रेणानिर्मिता ॥ १४ ॥ प्रतोल्यर्गलसंयुक्तंहेमप्राकारवेष्टितम् ॥
देवगंधर्वसंकीर्णंप्रासादंचमहाकुलम् ॥ १५ ॥ गायंतिचगणाः सर्वेवंशवादित्रना
दितम् ॥ नृत्यंतेचाप्सरास्तत्रदेवगंधर्वयोषिताः ॥ १६ ॥ वेदध्वनिंचनिर्घोषं
पठंतिमुनयः श्रुतेः ॥ स्नात्वामंदाकिनीतीर्थेअर्चयन्तिमहेश्वरम् ॥ १७ ॥ कुश
संस्तरणंकृत्वाएकरात्रिंवसेत्ततः ॥ नदीसरस्वतीतीर्थेगंतव्यंयोजनत्रयम् ॥१८॥
एकरात्रिंवसेत्तत्रनमस्कृत्वाजगद्गुरुम् ॥ अग्रतोदृश्यतेतत्रसिद्धाचार्यमनेकधा ॥
॥ १९ ॥ नानारत्नविचित्राणिहेमबद्धावसुंन्धरा ॥ इन्द्रनीलैर्महानीलैः पद्मरा
गोपशोभिताः ॥ २० ॥ दशयोजनविस्तीर्णंपुरीकांचनभूषिता ॥ विष्णुनास्था
पितंलिंगंदेवगंधर्वसंकुलम् ॥ २१ ॥ प्रासादगृहमाकीर्णंदेवकंन्यासमाकुलम् ॥

चूतचन्दनसंयुक्तंकदलीखंडमंडितम् ॥ २२ ॥ जायंतीचमहापुष्पमीलताराजच
पिका ॥ पाटलैर्विल्वपत्रैश्चअतिपुष्पसुवासितम् ॥ २३ ॥ देवकंन्यासमाकीर्णंवं
शवादित्रनादितम् ॥ भेरीमृदंगशब्देनशंखतूर्यंचवेणुका ॥ २४ ॥ भेरीमृदंगश
ब्देश्चवंशवादित्रनादितम् ॥ तस्यमध्येमहालिंगंगणगन्धर्वपूजितम् ॥ २५ ॥
विष्णुनास्थापितंलिंगंस्नात्वातीर्थेसरस्वति ॥ पंचैतेसाधकाः सर्वेअर्चयित्वामहे
श्वरम् ॥ २६ ॥ रात्रिमेकंततःकृत्वानमस्कृत्वाजगद्गुरुम् ॥ सरस्वतीतटेचैवगं
तव्यमुत्तरांदिशम् ॥ २७ ॥ सरस्वतीतटेचैवआश्रमंदृश्यतेमहत् ॥ २८ ॥ (इ
ति श्रीकेदारकल्पे ईश्वरपार्वतीसंवादेविष्णुपुरीवर्णनोनामत्रयोदशः पटलः॥१३॥)
श्रीईश्वरउवाच ॥ ओंवासुकीप्रमुखाकारंदृश्यतेपन्नगोत्तमम् ॥ दृश्यतेशेषनागं

चतक्षकोधरणीधरः ॥ १ ॥ पन्नगः सर्वराजेन्द्रोराजाचैववलिस्तथा ॥ तिष्ठति
वासुकीनागोराजावैरोचनस्तथा ॥ २ ॥ राजाबलिः पन्नगैश्चसभायांपरिवेष्टित
म् ॥ सिंहासनानिदिव्यानिनानारत्नांकितानिवै ॥ ३ ॥ तत्रतिष्ठंतिराजेन्द्रपन्न
गेश्वरवासुकीम् ॥ अग्रतोदृश्यतेतत्रवेदविद्यामनेकधा ॥ ४ ॥ भेरीमृदंगशब्देन
काहलैः शंखमर्दलैः ॥ वाद्यंतेतानिनिर्घोषैर्नानास्वरस्तथैवच ॥ ५ ॥ सभांविनो
दसंयुक्तांवेणुनादेनसर्वतः ॥ वाद्यंतेचतथासर्वेयथामेघेनगर्जिताः ॥ ६ ॥ स्थानेत
स्मिन्पुरेरम्येनानारत्नविभूषितम् ॥ योजनार्द्धंचविस्तीर्णंहेमप्राकारवेष्टितम् ॥
॥ ७ ॥ द्वादशादित्यतेजाढ्यंनागकन्यासमाकुलम् ॥ यौवनस्थामदोन्मत्तादिव्य
तेजासमप्रभा ॥ ८ ॥ मृगाक्षीहंसगामिनीनूपुराभिरलंकृता ॥ करकंकणसंयुक्तंहा

रकेयूरभूषितम् ॥ ९ ॥ संपूर्णचंद्रनयनैर्दिव्यवस्त्रपरिच्छदा ॥ मृदुकोमलदेहाच
वदंतिकोकिलास्वरम् ॥१०॥ शिरः पुष्पसुगंधाचनागवल्लीविभूषितम् ॥ सर्वल
क्षणसंपूर्णारूपयौवनगर्विताः ॥ ११ ॥ सर्वागुणसमोपेताःकुंडलैरुपशोभिताः ॥
दिव्यपुष्पैः शिरोवध्वादिव्यगंधानुलेपनन् ॥ १२ ॥ साधकाश्चगतास्तत्रसर्वेते
विस्मयंगताः ॥ तांदृष्ट्वाचमहाप्राज्ञः पुरीसर्वगुणान्विताः ॥ १३ ॥ रम्यंमनो
हरंदिव्यंअग्निज्वालासमाकुलम् ॥ उत्तुंगशिखराकारंप्राकारंतोरणान्वितम् ॥
॥ १४ ॥ रत्नमुक्ताचवैडूर्यस्फुरंतेचकिताज्वला ॥ कपाटार्गलसंयुक्तंपश्यंतिपुरमु
त्तमम् ॥ १५ ॥ इन्द्रनीलैर्महानीलेः पद्मरागोपशोभितैः ॥ तस्मिन्वनेपुरेरम्येहे
मवज्ञावसुंधरा ॥ सुवर्णवृक्षसंयुक्तंफलपुष्पसमाकुलम् ॥ सदाचदृश्यतेपुष्पंकूष्मां

डसदृशंफलम् ॥ १७ ॥ सुवर्णकेतकीजातितिष्ठंतिराजचंपिका ॥ वकुलैःशतपत्रै 
श्चदेववृक्षैश्चपाटलैः ॥ १८ ॥ वापीकूपतडागादिप्रासादगृहमाकुलम् ॥ ध्वज १५

मालाकुलंदिव्यंशिखरैश्चैवशोभितम् ॥ १९ ॥ चूतचंदनसंयुक्तंकदलीखंडमंडि
तम् ॥ वृक्षराजसमाकीर्णंविवाहोत्सवसंकुलम् ॥ २० ॥ रम्यंमनोहरंदिव्यमुदि
तार्कसमप्रभम् ॥ जलमध्येयथापद्मंनक्षत्राणांयथाशशि ॥ २१ ॥ तथानाग
पुरीचैवशोभतेचमनोरमा ॥ साधकाश्चगतास्तत्रदृष्ट्वाचकुहवल्लभाम् ॥
॥ २२ ॥ निशिवह्निर्यथातेजोदृश्यतेचयथापुरी ॥ गंधर्वायत्रगायंतेगीतशास्त्र
समाकुलम् ॥ २३ ब्राह्मणावेदनिर्घोषैः सर्वेशास्त्रंपठंतिच ॥ शिवालयेनसंकीर्णं
नानालिंगसमाकुलम् ॥ २४ ॥ तस्यमध्येमहाराजातिष्ठतिपन्नगोत्तमः ॥ दिव्य 

वस्त्रपरीधानंदिव्यगंधानुलेपनम् ॥ २५ ॥ दिव्यदेहसमाकायाः दिव्याभरणभू
षिताः ॥ सर्वेगुणसमोपेतादिव्यभोगसमाकुलम् ॥ २६ ॥ दृष्ट्वाचसाधकास्त
त्रदंति साधकाः प्रिये ॥ राजउवाच ॥ क्वभुवनागतासिद्धाः क्वस्थानेचैत्रगम्य
ते ॥ २७ ॥ साधकउवाच ॥ आगतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ राजो
वाच ॥ श्रुत्वाचसाधकाः सर्वेममवाक्यंसुनिश्चितम् ॥ २८ ॥ पंचादिसाधकाः
सर्वेगच्छाचार्ययथासुखम् ॥ शतत्रयंचकंन्यायांदीयतेचपृथक्पृथक् ॥ २९ ॥ व
र्षपंचशतंआयुः कामरूपामहावलाः ॥ आचार्यसाधकाः सर्वेभुंजभोगयथासुख
म् ॥ ३० ॥ दिव्यवस्त्रपरीधानंदिव्याभरणभूषितम् ॥ दिव्यपुष्पशिरोबध्वावि
मानारूढसाधकाः ॥ ३१ ॥ यत्रस्थानेमहावीरायत्रेच्छातत्रगम्यते ॥ अस्मिन्ने

केदार | वपुरेरम्येयत्रबहुकंन्यासमाकुलम् ॥ ३२ ॥ अस्मिंस्थानेमहाभोगास्तेभोगादेवदुर्ल्लं | कल्प
भाः ॥ तिष्ठंतुसाधकाः सर्वेभुंजंतिविपुलांश्रियम् ॥ ३३ ॥ एतन्मेकथितंभोग्यं | १४
३६ | भोक्तव्यंसाधकैः सह ॥ पश्चात्तुसाधकाः सर्वेमृत्युलोकेव्रजंतिच ॥ ३४ ॥ सर्वै
गुणसमोपेताराजाभवतिधार्मिकाः ॥ साधकउवाच ॥ मृत्युलोकेमहादुःखंगंतव्यं
चमहान्नृपम् ॥ ३५ ॥ मृत्युलोकेभयाद्भीताराजानोह्यत्रगम्यते ॥ यत्रस्थानेम
हाराजन्तिष्ठंतिशंकरैः सह ॥ ३६ ॥ मयातत्रैवगंतव्यंयत्रदेवोमहेश्वरम् ॥ त्व
याचवदतेराजाहृदयेनैवरुच्यते ॥ ३७ ॥ अवश्यंतत्रगंतव्यंयत्रब्रह्माहरोहरिः ॥
राजोवाच ॥ साधुसाधुमहाप्राज्ञः क्षणमेकोऽत्रतिष्ठति ॥ ३८ ॥ करसंपुटीसंभू
त्वाराज्ञेतत्रनिवेदितम् ॥ भक्षितंफलमेकैकंदेववदानवदुर्ल्लभम् ॥ ३९ ॥ पंचादि | ३६

साधकाः सर्वेंगंतव्यंत्वजरामरम्॥फलानिभक्षितान्येवह्यमृतंचपिबंतिच ॥४०॥ पं
चादिसाधकाः सर्वेंगंतव्यमुत्तरामुखम् ॥ ४१ ॥ ( इतिश्रीकेदारकल्पे ईश्वरपार्व
तीसंवादेनागपुरीवर्णनोनामचतुर्दशः पटलः ॥ १४ ॥ ) श्रीईश्वरउवाच ॥ ओं
अथतोदृश्यतेतत्रहेमबद्धावसुंधरा ॥ तस्मिंस्थानेपुरंरम्यंनानारत्नविभूषितम् ॥
॥ १ ॥ अर्द्धयोजनविस्तीर्णंप्रासादैरुपशोभितम् ॥ वासितंचपुरीः सर्वाः सुगंध
कुसुमादिभिः ॥ २ ॥ इन्द्रनीलैर्महामहानीलैः स्फुरंतिचमहापथे ॥ मौक्तिकैश्च
न्द्रकांतैश्चवैडूर्यमणिरश्मिभिः॥३॥रत्नज्वालासमापेतांमहादिव्यांमनोहराम् ॥
अग्निज्वालासमोपेतांचित्रकर्मोपशोभिताम्॥ ४ ॥ रम्यंमनोहरंदिव्यंचन्द्रादित्य
समप्रभम् ॥ उत्तुंगशिखराकारंदिव्यमालाविभूषितम् ॥ ५ ॥ रत्नमालासमो

पेतांपुष्पमालासुशोभितम् ॥ तत्रस्थानेमहादिव्यंबहुगन्धादिवासितम् ॥ ६ ॥
रत्नमालासमाकीर्णैः सिद्धैश्चैवोपदेशितम् ॥ देवस्यपाश्चिमेभागेतिष्ठंतिफलि
ताद्रुमाः ॥ ७ ॥ फलैश्चनिर्मिताः शाखाः कूष्मांडसदृशंफलम् ॥ कूष्मांडफलरू
पेणह्यमृतंचव्यवस्थितम् ॥ ८ ॥ गृहीत्वाभक्षयेच्चार्द्धंशिवेचार्द्धंनिवेदयेत् ॥ एवं
सर्वेसमाख्याताः निद्राश्चैवगताः पुनः ॥ ९ ॥ नानारत्नसमाकीर्णंप्रासादंतत्रशो
भितम्॥तस्यमध्येमहारम्यंगताः सर्वेचसाधकाः ॥ १० ॥ ब्राह्मणाः स्थापितंलिं
गंतत्रदेवंमहेश्वरम्॥साधकाश्चगताः सर्वेनमस्कृत्वाजगद्गुरुम् ॥ ११ ॥ पंचा
दिसाधकाः सर्वेनमस्कृत्वासदाशिवम् ॥ स्वर्गस्थानेगणाः सर्वेआगतागणकोटि
शः ॥ १२ ॥ आगताश्चतथाकन्याअर्चयंतिपृथक्पृथक् ॥ पूजांचक्रियतेस्वामि

न्अत्रतिष्ठयथासुखम् ॥ १३ ॥ स्वर्गस्यकन्याश्चागत्यनानालक्षणसंयुताः ॥ भे
रीमृदंगशब्देनशंखकाहलमर्दलैः ॥ १४ ॥ वेणुतालमहाशब्दंवाद्यंतेविविधानि
च ॥ नृत्यंतेचप्रकुर्वंतिलिंगस्याग्रेनिरंतरम् ॥ १५ ॥ मधुरस्वरगंधर्वाः गीतंकुर्वं
तियोषिताः ॥ हर्षमानाश्चतेसर्वेकर्पूरेणतुचंदनैः ॥ १६ ॥ पठंतिविविधंशास्त्रं
मुनयोदेवतास्तथा ॥ अर्चनंचप्रकुर्वंतिकर्पूरेणसमन्वितम् ॥ १७ ॥ तस्मिन्स्था
नेमहातीर्थंधर्मकर्मसमन्वितम् ॥ गुरूपदेशमार्गेणपूजयित्वातुशंकरम् ॥ १८ ॥
अत्रस्थानेमहातीर्थंवेदविद्यांवदाम्यहम् ॥ अस्मिन्स्थानेमहातीर्थेएकरात्रिंचका
रयेत् ॥ १९ ॥ अर्द्धरात्रौभवेन्निद्रातस्मिंस्थानेमहाबुधैः ॥ स्वप्नेचदृश्यतेरु
द्रंतत्रदेवंमहेश्वरम् ॥ २० ॥ जटामुकुटधारिणंचंद्रार्द्धकृतशेखरम् ॥ नीलकंठंव्र

षारूढंशूलपाणिंमहाबलम् ॥ २१ ॥ त्रिनेत्रंदशभुजांश्चभस्मगात्रविलेपनम् ॥
साधुसाधुभवेत्तत्रसिद्धाश्चउपदेशितम् ॥ २२ ॥ देवस्यपश्चिमेभागेतिष्ठंतिफलि
ताद्रुमाः॥फलंनिर्मिनशाखायांकूष्माण्डसदृशोपमम् ॥२३॥ कूष्माण्डफलरूपेण
ह्यमृतंचव्यवस्थितम् ॥ गृहीत्वाभक्षयेच्चार्द्धंशिवेचार्द्धंनिवेदयेत् ॥ २४ ॥ स्वप्ने
सर्वेमहाबुद्धिः पुनर्निद्रांचनागताः ॥ सुखमेकंचपश्यंतिसाधकाविस्मयंगताः ॥
॥ २५ ॥ स्वप्नेश्रुतंतुपूर्वंहिपश्यंतिचमहेश्वरम् ॥ इदंतुप्रकटंधर्मंसर्वशास्त्रविवर्द्ध
नम् ॥ २६ ॥ तस्यतद्वचनंश्रुत्वास्वप्नेचशिवसन्निधौ ॥ दृश्यतेचपुरींसर्वांप्रस्थि
तास्तत्रसाधकाः ॥ २७ ॥ सुपक्वंमृदुगंधंचनदीर्घंनचह्रस्वकम् ॥ गृहीत्वाफलमे
कैकंफलंकांचनसन्निभम्॥ २८ ॥ स्नात्वाचशुचिताःसिद्धाःपुनर्गत्वाशिवालयम्॥ ३८

महेश्वरंपूजयित्वाचार्द्धंचैवतुभक्षितम् ॥ २९ ॥ अर्द्धंशिवेचानिवेद्यफलभक्षण
मात्रतः ॥ यावत्तिष्ठंतितेसिद्धामूर्छाभवंतिसाधकाः ॥ ३० ॥ चित्तंचसुस्थिरंकृ
त्वायावद्गोदोहमात्रितम् ॥ सर्वेव्याधिविनिर्मुक्ताः स्मरंतिपरमेश्वरम् ॥ ३१ ॥
दिव्यदेहमहाकायाजरापलितवर्जितम् ॥ चतुर्वेदीभवेद्भक्तामलगंधविवर्जितम् ॥
॥ ३२ ॥ देवद्विजप्रसादेनसर्वशास्त्रविशारदाः ॥ भवंतिसाधकाः सर्वेगुरुधर्मब
लेनच ॥ ३३ ॥ भवंतिज्ञानिनः सिद्धारुद्रतुल्यपराक्रमाः ॥ पश्यंतिसाधकाः स
र्वेतेचजातिस्मराभवन् ॥ ३४ ॥ महावीरामहायोद्धाःस्वर्गमृत्युरसातलम् ॥ रूप
वंतोमहातेजा महाबलपराक्रमाः ॥ ३५ ॥ भवंतिसाधकास्तत्रपश्यंतिगगनांतर
म् ॥ पश्यंतिचपुरीः सर्वेकैलासशिखरालयम् ॥ ३६ ॥ दिव्यंचक्षुर्भवेत्तस्यआ

चार्यसाधकैः सह ॥ इच्छायांकुरुतेसर्वेंदीर्घदृष्टिर्भविष्यति ॥ ३७ ॥ प्रणम्यत्रि
षुलोकेषुइच्छयाहरतेजगत् ॥ सहस्रयोजनंगत्वाकरोतितस्यलीलया ॥ ३८ ॥
नवकोटिगजानांचपुनर्गत्वातुतेसुखम् ॥ तस्यशंकांप्रकुर्वंतिवलंप्राप्तंचसर्वदा
॥ ३९ ॥ स्वर्गेमर्त्येचपातालेदेवदानवराक्षसाः ॥ एवंदेहवलंतेषांगोपदंमात्रदृ
श्यते ॥ ४० ॥ तत्रासन्साधकाः सर्वेसत्यंसत्यंवदाम्यहम् ॥ सिद्धाचार्यसमीपे
तान्संभवत्यजरामरान् ॥ ४१ ॥ आत्मानंनैवशोचंतिमानुष्याजन्मसंभवाः ॥ वि
द्यमानंमहाशास्त्रंआस्थितानरकार्णवे ॥ ४२ ॥ नपश्यंतिपथंदिव्यंमायामोहसमा
कुलम् ॥ महादेवमहाशास्त्रंमहादेवमुखोद्भवम् ॥ ४२ ॥ महाकल्पमहास्वर्गंम
हाभोगकरंनृणाम् ॥ नपश्यंतिपथंदिव्यंअध्यास्तेऽपिविमोहिताः ॥ ४४ ॥ अने

नैवतुदेहेनस्वर्गपुष्पंप्रगम्यते ॥ शिवेनकथितंसर्वेमहेशानंमनोरम् ॥ ३५ ॥
( ॥ इतिश्रीकेदारकल्पेईश्वरकार्तिकसंवादेब्रह्मपुर्यांअमृतफलवर्णनोनामपंचदशः
पटलः ॥ १५ ॥ ) श्रीईश्वरउवाच॥ओंनमस्कारंशिवंकृत्वासर्वेतेगणमोहिताः ॥
पुरापश्यंतितेसिद्धाः नदींविपुलगामिनीम् ॥ १ ॥ दशयोजनविस्तीर्णांह्यतिरम्यां
मनोहराम् ॥ लहरींतरंगगंभीरांफेनावर्त्तसमाकुलाम् ॥ २ ॥मणिरत्नसमाकीर्णांसू
क्ष्मकांचनबालुकाम् ॥ शंखमुक्तासमाकीर्णांहंससारससंयुताम् ॥ ३ ॥ चक्रवाक
समोपेतांमत्स्यकूर्मसमाकुलाम् ॥ कर्पूरवासगंधाढ्यांह्यतिस्वाद्वींसुशीतलाम्॥४॥
अनेकपुष्पसंयुक्तांपद्मांपुष्पैर्विराजिताम् ॥ विद्याधरास्तटान्वितायक्षगंधर्वाकिन्न
राः ॥ ५ ॥ जलक्रीडांचकुर्वंतिपूजयंतिसदाशिवम् ॥ एवंपश्यंतितेसिद्धाश्चंडवे

गांसरस्वतीम् ॥ ६ ॥ तत्रस्थानेमहासेनपंथंचैवनदृश्यते ॥ गंधर्वाणांध्वनिंश्रु
त्वासन्मुखायांतिसाधकाः॥७॥पश्यंतिचमहास्थानंह्यतिरम्यंतपोवनम् ॥ प्राप्तंसे
नमहादिव्यंशंखपालपुरंमहत् ॥८॥ संप्राप्ताः साधकास्तत्र आश्रमंयत्रतिष्ठति॥
प्राकारंगोपुरंचैवानिर्मितंदिव्यकांचनैः ॥ ९ ॥ प्रस्फुरंतिमहारत्नैर्निर्मितंपुरमुज्ज्व
लम् ॥ ध्वजमालाकुलंदिव्यंचित्रकर्मोपशोभितम् ॥ १० ॥ भेरीमृदंगशब्देन
शंखतूर्यसुवेणुकैः ॥ पटहैर्वेणुनादैश्चनानाशब्दैश्चशब्दितम् ॥११॥ नानापुष्प
समोपेतंदिव्यगंधमनोहरम् ॥ द्वादशादित्यतेजाढ्यंमंगलादपिमंगलम् ॥ १२ ॥
शतशश्चशतैः पंचलक्षकोटिरनेकधा ॥ देवतायत्रदिव्यंचनानारत्नविभूषितम् ॥
॥ १३ ॥ एकविंशतिषट्कोणंदृश्यतेधवलंगृहम् ॥ श्वेतपीतंरक्तश्यामंएवंवर्णक्र

मेणतु ॥ १४ ॥ पंचवर्णपताकाश्चदृश्यंतेपवनैरिताः ॥ महामंदिरशोभाढ्यंदृ
श्यतेचमनोरमम् ॥ १५ ॥ स्थानंहेममयंसर्वंसोमकांतिसमप्रभम् ॥ पुष्पैः फलैः
समाकीर्णंसुपक्वफलशोभितम् ॥ १६ ॥ चूतचंदनसंयुक्तंकदलीखंडमंडलम् ॥
देवगंधर्वसंकीर्णंवंशवादित्रनादितम्॥१७॥महारत्नैश्चसंयुक्तंकदलीखंडमंडितम्॥
हेमेनरचिताभूमिरुदिताकंसमप्रभा॥हेमरत्नसमाकीर्णंप्रासादंगृहमाकुलम्१६दश
योजनविस्तीर्णंशंखपालपुरंमहत्॥इन्द्रनीलैर्महानीलैःपद्मरागैःसुशोभितम् २०
अर्द्धयोजनविस्तीर्णंशंखपालस्यमंडपम् ॥ स्तंभहेममयंसर्वंसोमकांतिसमप्रभम् ॥
॥ २१ ॥ महदुत्सवसंयुक्तंदीपमालासमाकुलम् ॥ रत्नमालासमोपेतंपुष्पमाला
सुवेष्टितम् ॥ २२ ॥ नानाविधैश्चरत्नैश्चशोभितंधवलंगृहम् ॥ स्वस्तिकंरत्नपूरैः

१९

श्चकुंकुमैर्यक्षकर्दमैः ॥ २३ ॥ नित्योत्साहसमाकीर्णंद्वारेचगणशोभितम् ॥ तस्य
मध्येमहाश्रेष्ठंशंखपालनृपोत्तमम् ॥ २४ ॥ अप्सरोगणगंधर्वास्तिष्ठंतिचसमंत
तः ॥ संप्राप्ताःसाधकास्तत्रआश्रमंयत्रातिष्ठति ॥ २५ ॥ प्राकारैर्गोपुरैःश्रेष्ठैर्नि
र्मितंदिव्यकांचनैः ॥ प्रस्फुरंतिमहारत्नैर्वेष्टितंभुवनोत्तमम् ॥ २६ ॥ ध्वजमाला
समोपेतंचित्रकर्मोपशोभितम् ॥ भेरीमृदंगशब्देनशंखतुर्यैश्चवेणुभिः ॥२७॥ सिं
हासनानिदिव्यानिहेमरत्नैर्विभूषितम्॥तत्रतिष्ठतिराजेंद्रशंखपालपुरंमहत्॥२८॥
दुंदुंभिस्तालनिर्घोषैर्वेणुवादित्रनादितम् ॥ शिरः पुष्पसुगंधैश्चतांबूलमुखमं
डितम् ॥२९॥ मृगाक्षींहंसगामिनींसर्वाभरणभूषिताम् ॥दिव्यवस्त्रपरीधानांदिव्य
गंधानुलेपनाम् ॥ ३० ॥ शोभितांशिरसापुष्पैस्तांबूलमुद्गिरंतिच ॥ मृगाक्षींहंस

गामिनींकुंडलाभरणोज्वलाम् ॥ ३१ ॥ संपूर्णचंद्रवदनांकोकिलामंजुभाषिणीम् ॥
करेकंकणसंयुक्तांहारनूपुरशोभिताम् ॥ ३२ ॥ दिव्यदेहमहास्वच्छांदिव्यतेजोम
हाज्वलाम् ॥ अशोकफलहस्तांचरूपयौवनगर्विताम् ॥ ३३ ॥ जानुर्बाहुस्तथासर्वाः
कदलीस्तंभकोमलाः ॥ कमलदलैः शोभाढ्याः शोभितास्तत्रयोषितः ॥ ३४ ॥
केचिद्गजसमारूढाः केचिदश्वेचसंस्थिताः ॥ केचिद्विमानमारूढाः केचिद्दिव्यर
थेस्थिताः ॥ ३५ ॥ इच्छावाहनमारूढाः सर्वाः स्वच्छंदगास्तथा ॥ सर्वेकंन्यास
मारूढाः गच्छंतिललनागतिः ॥ ३६ ॥ शंखपालसुतास्तत्रपठंतिचरमंतिच ॥
॥ ३७ ॥ विद्यंतिचंचलाकारंपद्मनालेचकंटकैः ॥ क्षणेशुक्लाः क्षणेकृष्णास्तथा
दर्पणमेवच ॥ ३८ ॥ चंडवेगातटेचैवबहुपुष्पोपशोभितम् ॥ तस्यमध्येमहावृक्षं

सुवटोनामतत्परम् ॥ ३९ ॥ तस्मिंमस्क्तदोलंतींदोलंघंटाचामरभूषितम् ॥ रत्नमु
क्ताप्रवालैश्चकांचनंरचितालयम् ॥ ४० ॥ हिन्दोलयंतिताः कंन्यागायंतिक्रीड
यंतिच ॥ फलपुष्पसमाकीर्णंतस्यशाखावलंबितम् ॥ ४१ ॥ नानापुष्पसमाकीर्णं
श्रीपक्वान्नफलांस्तथा ॥ रत्नकांचनवैडूर्यकांचनैर्मणिरश्मिभिः ॥ ४२ ॥ अर्द्धयो
जनविस्तीर्णंउच्छ्रायोयोजनंभवेत् ॥ तस्यशाखाः प्रशाखाश्चगताश्चैवदशोदि
शः ॥ ४३ ॥ दिव्यवृक्षोमहातेजश्छायातस्यसुशीतलम् ॥ तस्यांमनोहरंदिव्यं
चंद्रादित्यसमप्रभम् ॥ ४४ ॥ तत्रातिष्ठंतिताः कंन्याः सर्वाभरणभूषिताः ॥ ति
ष्ठंतिपंचलक्षंचशंखपालसुतास्तथा ॥ ४५ ॥ साधकाश्चततोगत्वायत्रतिष्ठंति
सापुरी ॥ दृष्ट्वातत्रतदाकंन्यांसाधकाविस्मयंगताः ॥ ४६ ॥ आगताः स्वाग

तासिद्धाः कन्यास्तत्रवदंतिच ॥ आचार्यसाधकास्तत्रमूर्च्छांगच्छंतिसाधकाः ॥
॥ ४७ ॥ कन्यांस्तुकृतवान्वार्त्ताआचार्यसाधकैः सह ॥ शंखपालमहाराजाअमृ
तंचसुशीतलम् ॥ ४८ ॥ नखाग्रेक्षरतिनित्यंअमृतंबहुशीतलम् ॥ क्षरंतिचमहासे
नतपंतिचैवतत्परम् ॥४९॥ स्खलितंचामृतंतत्रपतितंचमुखेततः ॥ क्षणेनतत्र
जीवंतिवदंतीहंसगामिनी ॥ ५० ॥ सिंहासनानिदिव्यानिहेमरत्नविभूषितम् ॥
तत्रतिष्ठतिआचार्यः साधकैः परिवेष्टितम् ॥ ५१ ॥ तत्रस्थानेकथाकंन्याआर्तिं
चैवकरोतिच ॥ करेचसंपुटींकृत्वाकंन्यास्तत्रवदंतिच ॥ ५२ ॥ दिव्यवस्त्रपरीधा
नंदिव्यगंधानुलेपनम् ॥ दिव्यपुष्पशिरोवध्वादिव्याभरणभूषितम् ॥ ५३ ॥ सा
धुसाधुमहाप्राज्ञ दुर्लभंतवदर्शनम् ॥ स्वागतंभोमहासिद्धाः कन्यास्तत्रवदंतिच॥

॥ ५४ ॥ कन्योवाच ॥ क्वभुवनागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ आचा
र्यउवाच ॥ आगतामृत्युलोकान्तुगंतव्यंशंकरालयम् ॥ ५५ ॥ तस्मिन्नुआगता
देवंदिव्यपुष्पंचकारणम् ॥ जटामुकुटधारीचदिव्यदेहस्वरूपकम् ॥ ५६ ॥ दि
व्यवस्त्रपरीधानादिव्यगंधानुलेपनम् ॥ यावद्वदतिसाकंन्याशंकरालयमागता ॥
॥ ५७ ॥ दिव्यपुष्पशिरोवध्वारूपपात्रंमहान्नृपम् ॥ दिव्यराजोमहासेनदिव्याभ
रणभूषितः ॥ ५८ ॥ तत्रसेनमहाप्राज्ञदृष्ट्वापंचैवसाधकान् ॥ दृष्ट्वातुष्टास्त्त
तोभूत्वाराजावदंतितेसदा ॥ ५९ ॥ राजोवाच ॥ साधकै दर्शनंकृत्वासर्वपापैः
प्रमुच्यते ॥ पवित्राश्चमहाकंन्यासाधुसाधुशुभंवदेत् ॥ ६० ॥ अद्यमेसफलंज
न्मअद्यमेसफलंतपः ॥ अद्यमेसफलंराज्यंमयादृष्ट्वाचसाधकाः ॥ ६१ ॥ पुष्प

करंडमतिरुवाच ॥ क्षणार्द्धंतिष्ठतातावद्देवतायांतमागतम् ॥ स्तुतिंतुक्रियते राजाप्रणम्यसाधकान्प्रति ॥६२॥ शंखपालउवाच ॥ क्वभुवनागतासिद्धाः क्व स्थानेचैवगम्यते ॥ साधकउवाच ॥ आगतामृत्युलोकस्यगंतव्यंशंकरालयम् ॥ ॥ ६३ ॥ राजोवाच ॥ अस्मिन्नेवपुरेरम्यंबहुकंन्यासमाकुलम् ॥ पूर्णचन्द्रमुखी कंन्याः सर्वलक्षणभूषिताः ॥ ६४ ॥ वरायचारयसाकंन्यासर्वलक्षणसंयुता ॥ स्त नौताडफलाकारौशुभ्रांगाचन्दनान्विता ॥ ६५ ॥ तिष्ठंतिपंचलक्षंचकामांधामद विह्वलाः ॥ भुंजंतिचयथासौख्यंक्रीडंतिचैवकन्यकाः ॥ ६६ ॥ षोडशाव्दमिता कंन्याः सर्वलक्षणसंयुताः ॥ सर्वरूपान्विताश्चैवसाधकास्तिष्ठचैवहि ॥ ६७ ॥ कंन्यकाश्चमहारूपाः सर्वाः क्रीडंतिकन्यकाः ॥ कतिवर्षाणिजीवंतिभुंजंतिविपुलां

श्रियम् ॥ ६८ ॥ साधकउवाच ॥ अत्रचैत्रमहाराजाकतिवर्षाणिजीवति ॥ प
श्चात्तुकांगतिंगच्छेत्तत्क्वस्थानेचैवगम्यते ॥ ६९ ॥ राजोवाच ॥ सहस्रत्रयकं
न्यायादीयतेचपृथक्पृथक् ॥ संवत्सरसहस्रैकंभक्ष्यभोगाननुत्तमम् ॥ ७० ॥ आ
युरेताविधीयंतेभुक्तिंचविपुलांश्रियम् ॥ मृत्युलोकेव्रजंतिचजायतेविपुलेकुले ॥
॥ ७१ ॥ धन्यामातापिताधन्योधन्योदेशोनृपस्तथा ॥ धन्याग्रामपुरीधन्याउत्प
न्नायत्रसाधकाः ॥ ७२ ॥ उत्तिष्ठगम्यतेसिद्धास्त्वरितंचशिवालयम् ॥ तस्यत
द्वचनंश्रुत्वामनश्चिंतंतिसाधकाः ॥ ७३ ॥ साधकउवाच ॥ आचार्यवचनंश्रुत्वा
प्रत्यक्षंचैवगम्यते ॥ किमुपांडुरगात्राणिकंन्यकाचमहामुनिः ॥ ७४ ॥ राजोवा
च ॥ केतकीनांसुगंधंचलिप्तैः पद्मदलेनच ॥ हिन्दोलयंतिक्षेपाग्रहेमधूलिप्रले

पनम् ॥ ७५ ॥ कामराजंचोत्पद्यतेतेनपांडुरगात्रता ॥ तत्रस्थानेमहावीराभुंज
तिविपुलांश्रियम् ॥ साधकउवाच ॥ शंखपालमहाराजागतव्यंशंकरालयम् ॥
तस्यतद्वचनंश्रुत्वाराजावचनमब्रवीत् ॥ ७७ ॥ राजोवाच ॥ कथंनभवतांरुच्यं
कथंचात्रसमागताः ॥ पंचैतेसाधकास्तत्रकथंतेनैवरोच्यते ॥ ७८ ॥ मृत्युलोके
महाभोगाविद्यंतेकथमागताः ॥ पंचैतेसाधकास्तत्रइच्छंतिसर्वदेवताः ॥ ७९ ॥
नानाभोगान्वितापृथ्वीमृत्युलोकादिहागताः ॥ तत्रसर्वंपरित्यज्यस्त्रियोयौवनग
र्विताः ॥ ८० ॥ मृत्युलोकेमहाभोगाः कथयामिवचः शृणु ॥ वाजीश्चविविधा
स्तत्रत्यक्त्वायौवनगर्विताः ॥८१॥ भुक्तंशालिघृतंक्षीरंक्षौद्रंपिबंतिशर्कराम् ॥ मृ
त्युलोकेमहाभोगांस्त्यक्त्वायौवनगर्विताः ॥ ८२ ॥ चन्दनादिमहाभोगाकेतकीरा

जचंपिका ॥ जातीश्चशतपत्रैश्चविल्वपत्रैश्चपाटलैः ॥ ८३ ॥ मृत्युलोकेमहा
भोगावायुवेगतुरंगमाः ॥ गजैरथैस्तुरंगैश्चपूर्णचन्द्रमुखीस्त्रियाः ॥ ८४ ॥ उ
ष्ट्राणांवाहनंचैवगजारथतुरंगमाः ॥ करकंकणसंयुक्तंहारनूपुरभूषितम् ॥ ८५ ॥
वस्त्राणिचमहासूक्ष्माणिपट्टवस्त्रंचशोभितम् ॥ संपूर्णनागवल्लीचकर्पूरेणसम
न्विताः ॥ ८६ ॥ इच्छाभोगंचतिष्ठन्तिमृत्युलोकेचसाधकाः ॥ मृत्युलोकेमहाभो
गान्कथयामिवचः शृणु ॥ ८७ ॥ नानापुष्पसमाकीर्णंनानाफलसमाकुलम् ॥ क
दलीफलसंयुक्तंनारिकेलंचचूतकम् ॥ ८८ ॥ नानाभक्ष्यसमाकीर्णंबहुकन्न्याचपु
त्रकैः ॥ मृत्युलोकेमहाचार्यैनानाभोगसमाकुलैः ॥ ८९ ॥ तत्सर्वंचपरित्यज्याकिं
मर्थमिहआगताः ॥ सत्यंब्रूहिमहाचार्यसाधकैःपरिवेष्टितम् ॥ ९० ॥ साधकउवा

च ॥ मृत्युलोकेमहादुःखंकथयामितवशृणु ॥ मातृपितृसुतानांचबांधवानांस्तथा स्त्रियाः ॥ ९१ ॥ तेषांमहावियोगेनमयाभुक्ताह्यनेकधा ॥ गर्भवासभयाद्भीता स्तस्मात्तत्रगतावयम् ॥ ९२ ॥ संसारस्वप्नमात्रेणचलंप्राणंचलंधनम् ॥ चिंता श्चबहुधाश्चैवक्षुधास्तत्रपुनः पुनः ॥९३॥ एतद्दुःखभयाद्भीताः राजातत्रग तावयम् ॥ एवंदुःखंमहादुःखंमृत्युलोकेव्यवस्थितम् ॥ ९४ ॥ एवंदुःखंमहाराज नृमृत्युलोकेव्यवस्थितम् ॥ कथयामिमहादुःखंशृणुत्वंचमनः पुनः पुनः ॥ ९५ ॥ संसारभयभीताश्चवक्तुंनैवतुशक्यते ॥ कथयामिमहादुःखंशृणुज्ञानिप्रियामर ॥ ९६ ॥ अष्टोत्तरशतंव्याधिंदेहमध्येव्यवस्थितम् ॥ सागरेचजलंपूर्णंसंसा रेदुःखपूरितम् ॥ ९७ ॥ सुखंतत्रनपश्यंतिदुःखंबहुतरंसदा ॥ तत्रवाविपुलाभोगा

आयुर्हीनाश्चमानवाः ॥ ९८ ॥ इन्द्रजालसमादृष्ट्वासंसारसरितोमया ॥ महा
दुःखंचसंसारेमयादृष्ट्वापुनः पुनः ॥ ९९ ॥ मृत्युलोकेमहादुःखंसत्यंसत्यंवदा
म्यहम् ॥ अल्पंसुखंचसंसारेपुनर्दुःखगतावयम् ॥ १०० ॥ प्रथमंगर्भमध्येतुऊ
र्ध्वपाद अधोमुखम् ॥ द्वितीयंजन्मकालेतुमहादुःखंप्रवर्त्तते ॥ १०१ ॥ तृतीयेयौ
वनेदुःखंकामांधामदविह्वलाः ॥ तस्यदुःखंमहादुःखंजर्जरीकृतदेहिनाम् ॥
॥ १०२ ॥ तत्रसंकोचितंगात्रंजर्जरंपांडुरंवपुः ॥ पुत्रदारास्तथाबंधुर्वाक्यंचैवक
रोतिच ॥१०३॥ नसोनैत्रेजलस्रावंमुखेचजायतेततः ॥ अस्मिन्कालेमहादुःखं
पंचरूपंविनश्यति ॥ १०४ ॥ एवंदुःखभयाद्भीताः राजानोत्रसमागताः ॥ अ
अहंचकथयिष्यामिपुनर्दुःखंवदाम्यहम् ॥ १०५ ॥ शंखपालमहाराजनृशृणुत्वं

वचनंमम ॥ अभ्रमध्येपिपश्यंतिचंचलाविद्युतागतिः ॥१०८॥ क्षणंदृष्ट्वानपश्यं
तितथासंसारिणोजनाः ॥ मयादृष्ट्वामहाराजासत्यंसत्यंवदाम्यहम् ॥ १०७ ॥
तथाचकूपमध्येचघटिकाचभ्रमंतिच ॥ गतागतंचपश्यंतितथासंसारिणोजनाः ॥
॥१०९॥ लोचनेचमहाराजन्निमेषोन्मेषवर्तत्ते ॥ मयादृष्ट्वामहाराजंस्तथासंसा
रिणोजनाः ॥ ११० ॥ चंचलंसर्वसंसारेमयादृष्ट्वापुनः पुनः ॥ एवंदुःखभयाद्भी
ताः राजन्मेत्रगतावयम् ॥ १११ ॥ संसारस्यमहाघोरेमहादुःखेनपीडिताः ॥ म्र
महाकष्टंशृणुराजन्तस्यसंसारलोन्वितम् ॥११२॥ तस्यतद्वचनंश्रुत्वाराजावचन
मब्रवीत् ॥ राजोवाच ॥ ममंदिरंद्रष्टव्यंयथेच्छसितथाकुरु ॥ ११३ ॥ शंखपा
लेनसहिताः गतानृपतिमंदिरे ॥ आचार्यसहिताकंन्यावदंतिचपरस्परम् ॥

॥ ११४ ॥ कामाताक्वपिताचैवक्वभ्राताचवदप्रिये ॥ ब्रूहित्वांकामिनीसत्यं
यद्वाक्यंचवदप्रिये ॥११५॥ कंन्यकोवाच॥अहंचकथयिष्यामिशृणुसाधुमहातपः॥
शंखपालसुतासाध्व्यआन्दोलान्दोलितास्तथा ॥ ११६ ॥ कथयिष्याम्यहंतेवैशृ
णुसाधुमहामते ॥ शंखपालसुताएताःप्राक्कर्ममदविह्वलाः ॥ ११७ ॥ साध
कउवाच ॥ शृणुकामिनितत्त्वेनशुभवाक्यंवदाम्यहम् ॥ शंखपालऋषीराजाकथ्य
तेतस्यपुत्रिका ॥११८॥ कंन्यकाउवाच ॥ पंचलक्षंचपुत्रीणांसप्तलक्षंचपुत्रकाः॥
अर्द्धलक्षंचनारीणामेवंनृपकुटुंबिनाम् ॥११९॥ साधकउवाच ॥ कतीमागजास्ति
ष्ठंतिकत्यस्तवतुरंगमाः॥कतिरथाश्चतिष्ठंतिकतियोद्धाश्चभृत्यकाः ॥१२०॥ तत्र
स्थानेचरुच्यंतेनानाभोगसमाकुलम्॥नानाचित्रविचित्राणिनानावस्त्रसमाकुलम्॥

॥ १२१ ॥ कंन्योवाच ॥ द्वादशकोटिगजानांचषोडशकोटितुरंगमाः ॥ त्रिंश
त्कोटिरथास्तत्रपद्मकोट्योयुयुत्सुकाः ॥ १२२ ॥ अत्रस्थानेनरुच्यंतेनानाभोग
समाकुलम् ॥ नानाचित्रविचित्राणिगृहन्तिचह्यनेकधाः ॥ १२३ ॥ कंन्यकोवा
च ॥ गच्छगच्छमहासाधुआचार्यसाधकैः सह ॥ राजोवाच ॥ अद्यमेसफलंज
न्मअद्यमेसफलाक्रिया ॥ १२४ ॥ अद्यमेसफलंराज्यंमयादृष्ट्वाचसाधकाः ॥
अद्यमेसफलंकर्मअद्यमेसफलंतपः ॥ १२५ ॥ अद्यमेसफलासेवामयादृष्ट्वाचसा
धकाः ॥ अद्यमेसफलाभूमिरागताः सर्वसाधकाः ॥ १२६ ॥ ततस्तेसाधकाः स
र्वेगतास्तेउत्तरामुखे ॥ १२७ ॥ ( इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादेशंख
पालपुरीवर्णनोनामषोडशःपटलः ॥ १६ ॥ ) श्रीईश्वरउवाच ॥ ओंअग्रतोदृश्य

तेतत्रअप्रमादंमहागिरिः ॥ अप्रमादंचपश्यंतिप्रोत्तुंगंपर्वतंशुचिम् ॥१॥ पर्वतद्व
यमध्येचक्षीरोदसागरंमहत् ॥ अप्रमादस्यसोपानंहेमरत्नविभूषितम् ॥ २ ॥ तत्र
गच्छंतितेमार्गेगंतव्यंसाधकास्तथा ॥ तस्यशृंगपुरीदिव्यमतिरम्यंमनोहरम् ॥
॥ ३ ॥ शतयोजनविस्तीर्णंबालार्कसदृशप्रभम् ॥ प्रतोल्याद्वारसंयुक्तंहेमप्राकारवे
ष्टितम् ॥ ४ ॥ रम्यंमनोहरंदिव्यंहेमरत्नविभूषितम् ॥ महापुरंमहारम्यंहेमप्राका
रशोभितम् ॥ ५ ॥ पृच्छंतिहिमहासेनगंतव्यंसाधकैः सह ॥ प्रासादगृहसंकीर्णं
तोरणैरुपशोभितम् ॥ ६ ॥ हैमेनरचिताभूमिरग्निज्वालासमप्रभम् ॥ पुष्प
प्राकारसंकीर्णंचित्रकर्मोपशोभितम् ॥७॥ अर्द्धयोजनविस्तीर्णंमंदिरंतस्यमंडपम् ॥
सिंहासनानिदिव्यानिहेमरत्नविभूषितम् ॥८॥ तत्रातिष्ठतिराजेन्द्रसूतपालोमहान्

पः ॥ सर्वलक्षणसम्पूर्णमहाबलपराक्रम ॥ ९ ॥ दिव्यवस्त्रपरिधानांदिव्याभर
णभूषिताम् ॥ संपूर्णचंद्रवदनांदिव्यगंधानुलेपनाम् ॥१०॥ साधकाश्चगतास्त
त्रदृश्यन्तेसर्वकन्यकाः ॥ दृष्ट्वाचसाधकास्तत्रवदंतिसाधकाः प्रिये ॥ ११ ॥ पृ
थिव्यांरुचितेनैवकिमर्थमिहमागताः ॥ सत्यंब्रूहिमहाचार्यसाधकाः परिवेष्टितम् ॥
॥ १२ ॥ साधकउवाच ॥ संसारस्वप्नमात्रेणसंसारंदुःखसागरम् ॥ महादुःखश्च
णुराजन्शोकचिंताप्रपीडिताः ॥१३॥ जननीगर्भमध्येचमहादुःखंप्रवर्त्तते ॥ महा
नरकंचभोक्तव्यंमहाकष्टप्रपीडिताः ॥१४॥ गर्भज्वालामहादग्धंमलज्वालादयान
राः॥भोक्तव्यंचमहानरकंमहादुःखंप्रवर्त्तते ॥ १५ ॥ पश्चाच्चपतितोभूमौमानवःस
र्ववेदनः ॥ तस्मिन्कालेनजानामिसुखंदुःखंचतेनराः ॥१६॥ तुच्छायुर्मानुषानीचा

अर्द्धंगृहंतिशर्वरी ॥ तस्यार्द्धंचवियोगेस्यात्शेषंवाल्येचयौवने ॥ १७ ॥ एतेदुःख
भयाद्भीताःराजान्मात्रगतावयम्॥मृत्युलोकेमहादुःखंसत्यंसत्यंवदाम्यहम्॥ १८॥इ
न्द्रजालंमयादृष्ट्वासत्यंसत्यंवदाम्यहम्॥चपलंसर्वसंसारंमयादृष्ट्वामहान्नृपम् ॥
॥ १९ ॥ चपलंधनमायाचचपलंयौवनंपुनः ॥ स्वजनःप्रतिवंधुश्चधनंवाहनमंदि
रे ॥ २० ॥ एतादृष्ट्वामयासर्वेचपलंचमहन्नृपम् ॥ चतुराशीतिलक्षाणियोनि
स्थानेभ्रमंतिच ॥ २१ ॥ गमागमंचपश्यंतिभयाद्भीतामहान्नृपम् ॥ महादुःखंच
संसारेमहानरकंचपूरिते ॥ २२ ॥ एतद्दुःखभयाद्भीता राजन्नोऽत्रगतावयम् ॥
मित्रंवंधुंपरित्यज्यस्वजनैश्चह्यनेकधाः ॥ २३ ॥ पुत्रदारास्तथासर्वेस्वजनैश्चह्य
नेकधा ॥ त्यक्त्वाचतत्रगंतव्यंराज्यंचविभवंधनम् ॥ २४ ॥ सर्वेत्यक्त्वामयात

त्नीलवैडूर्य्यमौक्तिकाः ॥ गजाश्चैवरथास्तत्रतिष्ठंतिचगृहेमम ॥२५॥ उष्ट्राणां
वाहनंचैवसुखासीनंचपालकी ॥ तिष्ठंतिमंदिरेसर्वेगंतव्यंतत्रत्यक्तया ॥२६॥ स
र्वेतत्रमयात्यक्त्वाराजानोत्रमनोरमाम् ॥ चपलंसर्वसंसारंराजानस्तत्रआगताः ॥
॥२७॥ तत्रस्थानेमहासेनचिमानंचगताबहु ॥ आगताश्चसुराः सर्वेविमानारूढ
मागताः ॥ २८ ॥ आरूढाश्चसुराःसर्वेविमानास्तत्रआगताः ॥ तथाचैवपुरीदि
व्यंदेवगंधर्वयोषिताम् ॥ २९ ॥ सुरेंद्रसहितादेवा विमानारूढमागताः ॥ आग
ताश्चसुराःसर्वेरंभाद्यास्त्रीरनेकधा ॥ ३० ॥ देवतादिव्यकन्याश्चगंधर्वायक्षकि
न्नराः ॥ आगताश्चतथासिद्धाःदिव्यंतेचह्यनेकधाः ॥ ३१ ॥ श्रीईश्वरउवाच ॥
साधुसाधुमहाप्राज्ञआचार्यसाधकैःसह ॥ विमानंरुच्यतेवीराः शिवलोकेव्रजामहे

॥ ३२ ॥ मयाश्चप्रेरिताः सिद्धाःब्रह्मविष्णुमहेश्वराः ॥ विमानसहिताश्चैवचाग
तासुरानेकधाः ॥३३॥ त्वयागमनसिद्धार्थंप्रेषितंचह्यनेकधा ॥ शंखदुंदुभिनिर्घोषैः
काहलैर्भेरिमर्दलैः ॥ ३४ ॥ वेणुतालैश्चशृंगैश्चवाद्यंतेवह्यनेकधा ॥ आगताश्चत
तःकंन्यारूपयौवनगर्विताः ॥३५॥ संपूर्णचंद्रवदनावदंतिकोकिलस्वरम् ॥ मृगा
क्षीहंसगामिन्यांकुंडलाभरणोज्वलाः ॥३६॥ विद्यातेजस्समोज्योतिरूपराशिरलं
कृतम् ॥ करकंकणसंयुक्ताहारकेयूरभूषिताः ॥३७॥ सर्वलक्षणसंयुक्तंदिव्यगंधानु
लेपनम्॥शोभिताःशिरसापुष्पैर्नागवल्लीविभूषितं ॥३८॥ सर्वशृंगारशोभाढ्यानाना
शोभितनायकाः ॥ रूपयौवनसंपूर्णाभानुमित्रसमप्रभाः ॥ ३९ ॥ सर्वलक्षणसंपू
र्णाःसर्वाभरणभूषिताः ॥ कंन्यकासहितादेवाः दिव्यगंधानुलेपनम् ॥ ४० ॥ चा

मरैर्वीज्यमानैश्चच्छत्रंचोपरिधारयेत् ॥ आचार्यउवाच ॥ शृणुराजन्महाप्राज्ञ ए
कचित्तोऽव्यवस्थितम् ॥ ४१ ॥ विमानानिचरुच्यंतिसत्यंसत्यंवदाम्यहम् ॥ शंक
रस्यप्रसादेनगुरुधर्मवलेनच ॥ ४२ ॥ अहंचआगतादेववैमानानिनसंशयः ॥
विमानेनैवमेकार्यंशृणुशक्रमहाप्रभो ॥ ४३ ॥ विमानानांनमस्कृत्यआचार्यसाध
कैः सह ॥ गतानिचविमानानियत्रब्रह्माहरोहरिः ॥ ४४ ॥ सूतपालउवाच ॥ शृ
णुसाधुस्ततस्त्वंहिममवाक्यंसुनिश्चितम् ॥ आगतानिविमानानिशुभंभोगायथा
सुखम् ॥ ४५ ॥ आचार्यउवाच ॥ ममभोगानरुच्यंतेराज्यंचविपुलांश्रियम् ॥
त्यक्त्वानिचमहाराजम्वहुरत्नावसुंधराः ॥ ४६ ॥ विनारुद्रमहाराजन्नरुच्यंतेपुरी
तव ॥ यत्रस्थानेमहादेवउमयासहशंकरः ॥ ४७ ॥ तत्रस्थानेमहाराजन्गंतव्यं

केदार शंकरालयम् ॥ आगताश्चतथाकन्याःसूतपालसुताप्रभो ॥ ४८ ॥ सर्वारूढविमा कल्प
नानिर्गताश्चैवतुरंगमाः ॥ कन्यकोवाच ॥ अस्मिन्पुरेमहाभोगाभुंजन्भोगयथासुख
५१ म् ॥ ४९ ॥ किंकरिष्यासिकैलासेकिंकरिष्यासिशंकरः ॥ मृद्वीवतीप्रवक्ष्यामिकंन्या
लक्ष्याश्चसादृशी ॥५०॥ किमर्थंगम्यतेसाधुशंकरस्यपुनःपुनः॥रूपपालस्यकन्या
तुपूर्णचंद्रविभाविनी ॥ ५१ ॥ दिव्यवस्त्रपरीधानंदिव्यगंधानुलेपनं ॥ दिव्यपु
ष्पशिरेवध्वासर्वशास्त्रविशारदाः ॥ ५२ ॥ पंचलक्षमहासेनसूतपालसुतास्तथा ॥
रमंतिचपठंन्त्येवमहाबलपराक्रमाः ॥५३॥ राजोवाच ॥ अस्मिन्नेवपुरेरम्येस्वर्गतु
ल्योनसंशयः ॥ इच्छायांचमहाचार्यविमानारूढमागताः ॥ ५४ ॥ इच्छावस्त्रपरी
धानांदिव्यगंधानुलेपनाम् ॥ दिव्यदेहमहाकायाभोक्तव्यंसाधकैःसह ॥५५॥ आ ५१

चार्यउवाच ॥ कतिभोगम्यमायुष्यंपश्चात्कतिभविष्यति ॥ राजोवाच ॥ कन्या
पंचसहस्राणिदीयंतेचपृथक्पृथक् ॥ ५६ ॥ संवत्सरसहस्रैकंआयुरेताविधीयते ॥
भोक्तव्यंविपुलान्भोगान्मृत्युलोकंव्रजंतिच ॥ ५७ ॥ सर्वेधर्मसमृद्धाश्चजायंतेवि
पुलेकुले ॥ चक्रवर्तिमहाराज्ञःसैन्यंद्वारेचतिष्ठति ॥ ५८ ॥ सर्वेकामसमृद्धाश्चस्व
र्गेतुल्योनसंशयः ॥आचार्यउवाच॥ यदिपुण्यंमृत्युलोकेराजातत्रनगम्यते ॥ ५९ ॥
नरुच्यतेमयाराज्यंक्षणमेकंनतिष्ठति ॥ राजोवाच ॥ पक्वान्नकाभवेद्देवितिष्ठंतिसा
धकैःसह ॥ ६० ॥ क्षीरंदधिमधुघृतैरमृतंचपिबंतिच ॥ मंदारपारिजातंचपारिजा
तफलैस्तथा ॥ ६१ ॥ भोक्तव्यंचफलंचैवअमृतंचपिबंतिच ॥ क्षणमात्रंतुतेवीराः
मूर्च्छांगच्छंतिसाधकाः ॥६२॥ तिष्ठंतिक्षणमात्रेणस्मरंतिपरमेश्वरम् ॥ पश्चात्तु

साधकाः सर्वैरुद्रतुल्यपराक्रमं ॥ ६३ ॥ साधकउवाच ॥ अस्मिन्नेवपुरेरम्येरु
चिनैवमहान्नृपः ॥ प्रत्यक्षंदृश्यतेतत्रब्रह्मविष्णुमहेश्वरान् ॥६४॥ अस्मिंस्थानेन
मेकार्यंराज्यंचविपुलंनृपः ॥ मयातत्रैवगंतव्यंयत्रदेवोमहेश्वरम् ॥ ६५ ॥ अहंमे
स्वप्नमात्रेणकेचिद्दृष्ट्वापुनःपुनः ॥ पतिहीनायथानारीअन्नहीनायथातनुः ॥ ६६ ॥
शर्वरीचंद्रहीनाचरविहीनंयथादिनम्॥नृपहीनायथासेनानासाहीनंयथामुखम्॥६७॥
जन्मनाअक्षिहीनोचशिवशून्यातथापुरी ॥ राजोवाच ॥ यदिनोरुच्यतेसिद्धाःगंत
व्यंनघशक्यते ॥ ६८ ॥ यदिनोरुच्यतेराज्यंदेवकन्यास्तथैवच गच्छगच्छमहा
साधुयत्रदेवोमहेश्वरः ॥ ६९ ॥ अप्रमादस्यमानंचउत्तीर्णंगम्यतेततः ॥ ७० ॥
( इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादे सूतपालपुरीवर्णनोनाम सप्तदशः प

टत्तः ॥ १७ ॥ ) श्रीईश्वरउवाच ॥ अग्रतोदृश्यतेतत्रचंद्रादित्यसमप्रभा ॥ सा
धकाश्चगताः सेनगंतव्यमुत्तरांदिशम् ॥१॥ अप्रमादस्यसोपानंहेमरत्नविभूषित
म् ॥ ज्वालास्यंपद्मरागंचवैडूर्यमणिरश्मिभिः ॥ २ ॥ चद्रकांतशिलास्तत्रभानु
विंवसमप्रभाः॥महागिरिमहास्वर्गंअतिरम्यंमनोहरम् ॥ ३ ॥ दिव्यवृक्षमहातेजा
दृश्यंतेचर्दिशोदश ॥ अप्रमादगिरिपृष्ठाउत्तीर्णंगम्यतेतथा ॥ ४ ॥ महारम्यंम
महातेजाः पद्मपत्रव्यवस्थितम् ॥ अग्रतोदृश्यतेतत्रक्षीरोदसागरोपमम् ॥ ५ ॥
शतयोजनविस्तीर्णंतडागंदृश्यतेमहत् ॥ सुवर्णपंकजाकीर्णैबहुपुष्पैः सुशोभितम्॥
॥६॥ कुसुमोत्पलपद्मंचप्रक्षालीकृतसन्निधौ ॥ दृश्यतेहेमसोपानंवेष्टितंचदिशो
दश ॥ ७ ॥ सुवर्णकर्दमास्तत्ररेणुकांचनशोभितम् ॥ इन्द्रनीलैर्महानीलैर्वैडूर्य

मणिशोभितम् ॥ ८ ॥ तस्मिंस्थानेमहातीर्थेधर्मकर्मसमाचरेत् ॥ पितृभ्यउदकं
दत्वापिंडदानंतथैवच ॥ ९ ॥ ओंहुंहुंक्षुंक्षुंरुंरुंहुंहुंओं ॥ कल्पकोटिसहस्राणिकल्प
कोटिशशतानिच ॥ यस्यश्राद्धप्रभावेनपितृणांचजयांगतिम् ॥ १० ॥ एकोत्तर
शतञ्चैवपितृवंशंसमुद्धरेत् ॥ एकोत्तरंपितृशतंपितृवंशेसमुद्धरेत् ॥ ११ ॥ मातृ
वंशेभवेत्पूतउभयोर्वंशमुद्धरेत् ॥ साधकाः पितृसहिताजल्पयंतिपरस्परम् ॥१२॥
प्रत्यक्षंदृश्यतेतत्रसाधकादेवरूपिणः ॥ शंकरंसदृशंरूपंपितरोपिभवंतिच ॥१३॥
त्वत्प्रसादेनभोपुत्रअक्षयाचगतिर्मम ॥ ब्रह्मणास्थापितंलिंगंमध्येपूर्वंमहात्मने ॥
॥ १४ ॥ शंखमुक्तामहायुक्तंहंससारसशोभितम् ॥ शोभितश्चक्रवाकैश्चमत्स्यकू
र्मसमाकुलम् ॥ १५ ॥ कर्पूरगंधवातोयंअतिस्वादुसुशीतलम् ॥ दुग्धंदधिघृतंक्षी

रंक्षोद्रंपिवंतिशर्करैः ॥ १६ ॥ तत्सर्वंचपुरीरम्यंक्षीरोदसागरोपमम् ॥ सहस्रस्तं
भंविज्ञायप्रासादंपरिशोभितम् ॥ १७ ॥ गयायांकोटिपुण्यंचतत्पुण्यंक्षीरसागरे ॥
प्रत्यक्षंवदनैस्तत्रपितरोपिवदंतिच॥१८॥साधकाश्चगतास्तत्रसर्वेतेविस्मयंगताः॥
स्तुतिंकुर्वंतितेतस्यअर्चयंतिपृथक्पृथक् ॥ १९ ॥ भेरीमृदंगशब्देनशंखकाहलवे
णुकैः ॥ पटहैर्घोषशृंगंचमृदंगंतालनादितम् ॥ २० ॥ गीतंकुर्वंतिगंधर्वावीणावा
द्यतिसुंदरी ॥ लेपनैरर्चितंलिंगंकर्पूरागरुचंदनैः ॥ २१ ॥ भावभक्तिसमस्तेनन
मस्कृत्वापृथक्पृथक् ॥ अर्द्धरात्रौचतंदेवंरुक्तार्तिंकृत्वापुनःपुनः ॥ २२ ॥ अप्सरोग
णगंधर्वापूजितास्तत्रदेवताः ॥ नानाप्रकारभक्तिश्चनानापूज्याव्यवस्थिताः ॥ सु
वर्णपंकजैःपत्रैःपूजयंतिपुनः ॥२३॥ आर्तिंचैवप्रकुर्वंतिलिंगस्याग्रेनिरंतरम् ॥ स

रसः पश्चिमेभागेतिष्ठंतिवनमुत्तमम् ॥ २४ ॥ रणितंशृंगजाकारैरक्तकृष्णैश्चकर्बु
रैः ॥ पीतपंकजरक्ताक्षैः पंकजंतत्रशोभितम् ॥ २५ ॥ चूतचंदनसंयुक्तंकदलीखंड
मंडितम् ॥ सुवर्णकेतकीजातिनानापुष्पंचशोभितम् ॥ २६ ॥ पाटलैःशतपत्रैश्च
तिष्ठंतिराजचंपिका ॥ कूष्मांडफलरूपेणसर्ववृक्षाःफलंतिच ॥ २७ ॥ वनमध्ये
तथाचार्यसाधकैःपरिवेष्टितम् ॥ सुवर्णकास्तथावृक्षादृष्ट्वास्तत्रदिशोदश ॥
॥ २८ ॥ अग्रतोदृश्यतेतत्रप्रसंगोपिमहागिरिः ॥ तस्यसोपानमार्गेणगंतव्यंत
त्तयोःपुरी ॥२९॥ प्रसंगोपिमहाशोभास्तस्यशृंगेपुरीस्तथा ॥ साधकाश्चगतास्त
त्रपश्यंतिचमनोरमाम् ॥ ३० ॥ कोलाहलंमहादिव्यंदृश्यतेऽत्रदिशोदश ॥ दृ
ष्ट्वातत्रपुरंरम्यमतिशोभंमनोहरम् ॥ ३१ ॥ मणिरत्नसमाकीर्णंचंद्रादित्यसम

प्रभम् ॥ ध्वजमालाकुलंदिव्यंवहुरत्नोपशोभितम् ॥ ३२ ॥ प्रतोल्याद्वारसंयुक्तं
नानारत्नसमाकुलम् ॥ हेमप्राकारसंयुक्तंदृश्यतेच्चनिरन्तरम् ॥ ३३ ॥ महांस्था
नेसुसौभाग्यंविस्तीर्णंशतयोजनम् ॥ वापीकूपतडागानिप्राकारगृहमाकुलम् ॥
॥ ३४ ॥ रम्यंमनोहरंदिव्यंबहुगंधादिवासितम् ॥ प्रतोल्याद्वारसंयुक्तंप्राकारंपुर
शोभितम् ॥ ३५ ॥ अग्निज्वालासमोपेतंचित्रकर्मोपशोभितम् ॥ तस्यमध्येमु
निश्रेष्टः पूर्वोनाममहान्नृपः ॥ ३६ ॥ जटामुकुटधारीचंदिव्यदेहश्चमूर्तिमान् ॥
दिव्यवस्त्रपरीधानंदिव्यगन्धानुलेपनम् ॥ ३७ ॥ दिव्यपुष्पंशिरोवध्वाकुण्डला
भरणोज्वलाः ॥ चतुर्वेदीभवेद्वक्तासर्वशास्त्रविशारदः ॥ ३८ ॥ अर्द्धयोजनवि
स्तीर्णंमंदिरंतस्यमंडपम् ॥ सिंहासनानिदिव्यानिहेमरत्नविभूषितम् ॥ ३९ ॥ त

त्रतिष्ठतिराजेन्द्रसभायांपरिवेष्टितम् ॥ साधकाश्चगतास्तत्रतिष्ठंतिचमहानृप
॥ ४० ॥ राजोवाच ॥ केभुवनागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ साधक
उवाच ॥ आगतोमृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ ४१ ॥ राजोवाच ॥ अ
स्मिन्नेवपुरेरम्येनानाभोगसमाकुलम् ॥ तिष्ठंतिसाधकाः सर्वेभुंजन्तिविपुलांश्रि
यम् ॥ ४२ ॥ किंकरिष्यतिकैलासेकिंकरिष्यतिशंकरम् ॥ साधकउवाच ॥ किम
र्थंभोगमायुष्यंपश्चात्किंचभविष्यति ॥ ४२ ॥ राजोवाच ॥ कन्याःसप्तसहस्रा
णिदीयंतेचपृथक्पृथक् ॥ लक्षवर्षाणिआयुष्यंमहाभोगसमन्वितम् ॥४३॥ चक्रवर्ती
महाराजाभवेज्जातिस्मरोभुवि ॥ भुक्त्वाचविपुलान्भोगान्मृत्युलोकेव्रजंतिच ॥
॥ ४४ ॥ पुत्रपौत्रसमायुक्तंधनधान्यसमाकुलम् ॥ दीर्घायुर्विपुलान्भोगान्पुनस्ते

स्वर्गगामिनः ॥ ४५ ॥ साधकउवाच ॥ यदिपुण्यंमृत्युलोकेगंतव्यंचमहान्नृपः ॥
मृत्युलोकेमहद्दुःखंराजानोत्रगतावयम् ॥४६॥ मृत्युलोकेमहद्दुःखंत्यक्त्वैनंतुस
मागताः ॥ तत्रस्थानेगताःसर्वेविमानारूढमागताः ॥ ४७ ॥ साधकादर्शनंकृत्वा
हृष्यंतिचनमंतिच ॥ दिव्यवस्त्रपरीधानंदिव्यगंधानुलेपनम् ॥ ४८ ॥ कुंडलैःशो
भितैःकर्णैकट्यांचक्षुद्रघंटिकाः ॥ शोभिताःशिरसापुष्पैस्तांबूलंचैवशोभिताः ॥
॥ ४९ ॥ मृगाक्षीहंसगामिनीरूपयौवनगर्विताः ॥ करेकंकणसंयुक्तंहारनूपुरभूषि
तम् ॥५०॥ संपूर्णचंद्रवदनांनूपुराभिरलंकृताम् ॥ मेखलाशोभिताकट्यांकरकंक
णशोभिताम् ॥५१॥ कन्यकाउवाच ॥ क्वभुवनागताःसिद्धाःक्वस्थानेचैवगम्यते ॥
साधकउवाच ॥ आगतोमृत्युलोकात्स्वर्गंतव्यंशंकरालयम् ॥५२॥ कन्यकोवाच ॥

अस्मिंस्थानेपुरेरम्येनानाभोगसमाकुलम् ॥ तिष्ठंतुसाधकाः सर्वेभुंजन्तिविपुलां श्रियम् ॥ ५३ ॥ साधकउवाच ॥ अस्मिंस्थानेनमेकार्येनमेरुच्यंतिकामिनी ॥ अहंचतत्रगंतव्यंयत्रदेवोमहेश्वरम् ॥ ५४ ॥ एतैश्चसाधकाः सर्वेगंतव्यमुत्तरां दिशम् ॥ ५५ ॥ ( इतिश्रीकेदारकल्पेईश्वरकार्तिकसंवादेक्षीरोदकसागरवर्णनो नामाष्टादशः पटलः १८ ) श्रीईश्वरउवाच ॥ ओंअग्रतोदृश्यतेतत्रयत्रदेवोमहेश्वरः ॥ रूपयौवनहीनस्यअस्थिचर्मणएवच ॥ १ ॥ वृद्धब्राह्मणरूपंचजर्जरीकृतदेहिनाम् ॥ कायांकृत्वाक्षणंतस्यक्षीणंतुपुरकंपया ॥ २ ॥ तंवदतेमंदस्वरः पीडिताश्चक्षुधातृषा ॥ ब्राह्मणउवाच ॥ क्वभुवनादागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ ३ ॥ साधकउवाच ॥ आगतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ ब्राह्म

णउवाच ॥ दिव्यवर्षसहस्राणिभ्रमितोहंदिशोदश ॥ ४ ॥ नैवदृष्टोमहादेवोरुद्रा
दिभुवनेश्वरः ॥ दिव्यवर्षसहस्राणिनैवदृष्टोमहामुनिः ॥ ५ ॥ मयाचनिषितासा
धुः नैवदृष्ट्वामहेश्वरम् ॥ किमर्थंगम्यतेसाधु मांगच्छंकुरुभाषितम् ॥ ६ ॥ रु
द्रस्यदर्शनंसाधोदेवानामपिदुर्लभम् ॥ आचार्यउवाच ॥ त्वयाचकथितोविप्रहृद
येनैवरुच्यते ॥ ७ ॥ अवश्यंतत्रगंतव्यंयत्रब्रह्माहरोहरिः ॥ विप्रउवाच ॥ कुत
स्थानेमहादेवंकिंनामकीदृशंवलम् ॥८॥ कथंकार्यंमहादेवविपुलंकिंप्रयोजनम् ॥
दुर्लभंसर्वसंसारंदुर्ल्लभाइतरेजनाः ॥ ९ ॥ दुर्ल्लभंसर्वभूतानांसंसारप्रियदुर्ल्लभ
म् ॥ आचार्यउवाच ॥ त्वयाचकथ्यतेविप्रहृदयेनैवरुच्यते ॥ १० ॥ अपश्यंतत्र
गंतव्यंयत्रदेवोमहेश्वरम् ॥ ब्राह्मणउवाच ॥ कस्मिंस्थानेस्थितंरुद्रंकिंनामकीदृ

शंबलम् ॥ ११ ॥ कथंकार्यंमहादेवोविपुलंकिंप्रयोजनम् ॥ कस्यचैवसमोरुद्रःके
नरूपेणदृश्यते ॥ १२ ॥ कथंकार्योमहादेवः किंप्रायोनमहेश्वरम् ॥ ब्रूहितन्मेम
हावीराः किंकरिष्यतिशंकरम् ॥ १३ ॥ रुद्रस्यदर्शनंसाधोः कथयामिशृणुत्वया॥
साधकउवाच ॥ कथयामिशृणुस्वामिन्ईश्वरस्यप्रकारणम् ॥ १४ ॥ ईश्वरः स
र्वभूतेषुत्रैलोक्येसचराचरम् ॥ नीलकंठंवृषारूढंशूलपाणिंमहाबलम् ॥ १५ ॥
त्रिनेत्रंचदशभुजंभस्मगात्रविलेपनम् ॥ भस्मेनोद्धूलितंगात्रंसूर्यकोटिसमप्रभ
म् ॥ १६ ॥ एवंरूपंमहादेवमुमासार्द्धंत्रिलोचनम् ॥ विप्ररूपंपरित्यज्यदृष्ट्वावै
रुद्रदर्शनम् ॥ १७ ॥ दिव्यंदेहंमहाकायंदिव्यगन्धानुलेपनम् ॥ दिव्यंज्योतिर्म
हामूर्तिंमहारूपंमहाप्रभम् ॥ १८ ॥ जटामुकटधारिणंचन्द्रार्द्धकृतशेखरम् ॥ नी

लकण्ठंवृषारूढंशूलपाणिंमहाबलम् ॥ १९ ॥ त्रिनेत्रंतुदशभुजमुमासहितशंकर
म् ॥ प्रत्यक्षंदर्शनंदृष्ट्वासाधकानांवदंतिच ॥ २० ॥ रुद्रउवाच ॥ अहंतुष्टोम
हाप्राज्ञमहावीरमहातपः ॥ साधकउवाच ॥ यदितुष्टोमहादेवउमासार्द्धंत्रिलोचन
म् ॥ २१ ॥ गर्भवासंनपश्यंतियदितुष्टोमहेश्वरः ॥ कस्मिन्कालेचसंप्राप्तेमृत्यु
लोकेनमाम्यहम् ॥ २२ ॥ तेनमार्गेणगंतव्यंशिवकल्पंव्रजाम्यहम् ॥ तेनमार्गेण
गंतव्यंयत्रतिष्ठतिशंकरः ॥ २३ ॥ एवंदेहिवरंमह्यंयदितुष्टोसिशंकरः ॥ साधका
नांवरंदत्वाशिवलोकेगतोहरः ॥ २४ ॥ समिश्चैववरंलब्ध्वंयथेच्छमतिहर्षिताः ॥
हर्षतुष्टगताः साधुः प्रणमंतिमहेश्वरम् ॥ २५ ॥ तत्रतेसाधकाः सर्वेगंतव्यमुत्त
रांदिशम् ॥ २६ ॥ ( इतिश्री केदारकल्पे ईश्वरकार्तिकसंवादे ब्राह्मणरूपेण ई

श्वरवर्णनोनाम एकोनविंशतिः पटलः ॥ १९ ॥ ) श्रीईश्वरउवाच ॥ अग्रतो
दृश्यतेतत्रइन्द्रराजोमहान्नृपः ॥ कृत्वावैसिंहरूपेणमहारुद्रंभयंकरम् ॥ १ ॥ महा
दधिचवक्त्रचाशिरः पर्वतमार्जितम् ॥ तस्यस्वरनिनादंचयथामेघेनगर्जितम् ॥२॥
भूमिंचित्ताडितेक्रोधात्कंपितंभुवनत्रयम् ॥ दृष्ट्वासिंहंमहारूपंतीक्ष्णरुद्रोमहाबलः
॥ ३ ॥ साधकाश्चध्वनिंश्रुत्वावर्द्धतेचपुनः पुनः ॥ नखदंष्ट्रास्तीक्ष्णजिह्वाः स्फु
रंतिचतथापुनः ॥ ४ ॥ ततोदृष्ट्वामहासेनवनेसिंहभयंकरम् ॥ एवंदृष्ट्वामहा
प्राज्ञाः साधकाविस्मयंगताः ॥ ५ ॥ भयभीतामहासिंहंआत्मानंशोचयंतिच ॥
अघोरेणचमंत्रेणसर्वविघ्नक्षयंकरः ॥ ६ ॥ ओंहुंफट्स्वाहा ॥ सिंहउवाच ॥ क्व
स्थानेआगतासिद्धाः क्वस्थानेचैवगम्यते ॥ सिंहस्यवचनंश्रुत्वासाधुर्वचनमब्रवी

त् ॥७॥ साधकउवाच॥आगतामृत्युलोकाच्चगंतव्यंशंकरालयम्॥साधकानांवचः
श्रुत्वासिंहोवचनमब्रवीत्॥८॥सिंहउवाच॥कीदृशंमृत्युलोकंचकीदृशंशंकरालयम्॥
शृणुत्वंसाधकाः सर्वेंपातव्यंरुधिरंतव ॥ ९ ॥ आधारंसाधकानांचवांछितंचपुनः
पुनः ॥ आचार्यसाधकाः सर्वेंमागच्छंशंकरालयम् ॥ १० ॥ यदित्वंगच्छसेसाधो
स्वयंदेहेनजायते ॥ षण्मासाभ्यंतरेसाधोभोजनंनकृतंमया ॥११॥ मयाचावश्यंभो
क्तव्यंतवमांसंचसाधकाः ॥ नैवपश्यंतिजीवंतंउमासार्द्धत्रिलोचनम् ॥ १२ ॥ म
हापन्थमहाघोरंलंघयंतिशनैः शनैः ॥ आगतादिव्यमार्गेषुदृष्ट्वासिंहंभयंकरम्॥
सिंहस्यभयभीताश्चअघोरंजप्यतेमहत् ॥ ओंह्रुंफट्स्वाहा ॥ अघोरायमहामंत्रस
र्वविघ्नंविनश्यति ॥ १४ ॥ भीतैस्तुजप्यतेमंत्रैः अघोरंदेवदुर्ल्लभम् ॥ अघोराय

नमस्तस्मैदुर्ल्लभंभुवनत्रयम् ॥ १५ ॥ अघोरंजप्यमानस्यभयंनश्यातितत्क्षणात्॥
मूर्त्तिवंतंमहारूपंसर्वालंकारभूषितम् ॥ १६ ॥ गजारूढंसहस्राक्षंवज्रायुधंचशोभि
तम् ॥ इन्द्रउवाच ॥ अहंतुष्टोमहासाधुवरंवरयसुव्रत ॥ १७ ॥ साधकउवाच ॥
यदितुष्टस्त्वयादेवशक्रराजसुरोत्तमम् ॥ महापन्थेनराः केचित्तुविघ्नंनैवतुमेप्रभो
॥ १८ ॥ इन्द्रउवाच ॥ धन्यधन्यमहासाधोह्येकचित्तव्यवस्थितम् ॥ साधकाश्च
महाप्राज्ञाः आगताश्चपुरीवृतः ॥ १९ ॥ साधकउवाच ॥ महापन्थेभयंकिंचित्
विद्यतेसांप्रतंयदि ॥ त्वयाकस्यनशक्यंतेवक्तव्यंवचनंमम ॥ २० ॥ इन्द्रउवाच॥
एवंदुष्टादुराचाराविघ्नंचैवक्षयंप्रभो ॥ तस्यस्थानेसुराः सर्वेब्रह्माविष्णुमहेश्वराः॥
॥ २१ ॥ तत्रस्थानेमहादेवोभयंमार्गेनजायते ॥ हेमपन्थेचगंतव्यंनित्यंकल्पंस्म

रंतिच ॥ २२ ॥ तत्रविघ्नंनपश्यंतिसत्यंसत्यंवदाम्यहम् ॥ तत्रास्तेसाधकाः स
वैगंतव्यमुत्तरांदिशम् ॥ २३ ॥ ( इतिश्री केदारकल्पे ईश्वरकार्तिकसंवादे इन्द्र
सिंहरूपवर्णनोनाम विंशतिः पटलः ॥ २० ॥ ) श्रीईश्वरउवाच ॥ अथतोचभ
हासेनदृष्ट्वातत्रमहापुरीम् ॥ अग्नितेजः समायुक्तंचन्द्रादित्यसमप्रभम् ॥ १ ॥
चण्डवेगातटेचैवपुरीरुद्रेणनिर्मिता ॥ स्थितंकैलाशस्वच्छंदेमहागिरिवरोत्तमम् ॥
॥ २ ॥ शतयोजनविस्तीर्णंरत्नकांचनभूषितम् ॥ प्रत्यक्षंदृश्यतेतत्रज्वालानांच
न्द्रभास्करम् ॥ ३ ॥ इन्द्रनीलैर्महानीलैः चन्द्रकांतिसमप्रभम् ॥ हैमेनरचिताभू
मिः रुद्रप्राकारतोरणम् ॥ ४ ॥ अभ्रमध्येचशोभंतेनक्षत्राणांयथाशशी ॥ तस्मि
न्नेवपुरेरम्येबहुपुष्पंचशोभितम् ॥ ५ ॥ तत्रस्थानेगृहेरम्येबहुगंन्धादिवासितम्॥

चंपिकास्तत्रीतंष्ठतिकन्याकोटिसमन्विताः ॥ ६ ॥ कोकिलास्वरगंभीरंनागवल्ली
विभूषितम् ॥ नानापुष्पसमाकीर्णंबहुगन्धादिवासितम् ॥ ७ ॥ भेरीमृदंगशब्दे
नवंशवादित्रनादितम् ॥ वेणुतालमहाशब्दंपटहंतत्रनादितम् ॥ ८ ॥ वाद्यंतेवि
विधास्तत्रगायंतिक्रीडयन्तिच ॥ कुंकुमैर्दिव्यगन्धंचलेपनंकन्यकास्तथा ॥ ९ ॥
दिव्यवस्त्रपरीधानाहारनूपुरभूषितम् ॥ पद्मपत्रविशालाक्षीकरेकंकणशोभितम् ॥
॥ १० ॥ मुखरागंचतांबूलंकर्पूरेणसमन्वितम् ॥ केशैर्भ्रमरसंकाशैर्विह्वलागज
गामिनी ॥ ११ ॥ प्रस्फुरंतिकपोलंचकुर्वंतिकोकिलास्वरम् ॥ मृदुकोमलदेहाय
सर्वकामस्वरूपिणी ॥ १२ ॥ दिव्यवस्त्रपरीधानंदिव्यंगन्धानुलेपनम् ॥ मुष्टिग्रा
ह्यंसुमध्यश्चकरीकुंभसमस्तनम् ॥ १३ ॥ अशोकफलहस्तेचनातिदीर्घेनह्रस्वक

म् ॥ दृष्ट्वाचविविधाः कन्याः साधकाविस्मयंगताः ॥ १४ ॥ आगताः स्वाग
ताः सिद्धाः कन्यास्तत्रवदंतिच ॥ कन्योवाच ॥ क्वभुवनागताः सिद्धाः क्वस्था
नेचैवगम्यते ॥ १५ ॥ साधकउवाच ॥ आगताम्मृत्युलोकाच्चगंतव्यंशंकरालय
म् ॥ कन्यकोवाच ॥ चंपिकातिष्ठतितत्रचंपिकाअतिहर्षिता ॥ १६ ॥ अस्मि
न्नेवपुरेरम्येवहुकन्यासमाकुलम् ॥ तिष्ठंतुसाधकाः सर्वेभुंजंतिविपुलांश्रियम् ॥
॥ १७ ॥ साधकाः चम्पिकांदृष्ट्वासर्वपापैः प्रमुच्यते ॥ चम्पिकोवाच ॥ क्व
स्थानेआगतास्तत्रआगत्यतुसत्यंवदेत् ॥ १८ ॥ साधकउवाच ॥ आगताम्मृत्यु
लोकाच्चगंतव्यशंकरालयम् ॥ चम्पिकोवाच ॥ कन्यादशसहस्राणिदीयंतेचपृ
थक्पृथक् ॥ १९ ॥ कोटिवर्षाणिआयुष्यंमहाभोगसमन्विता ॥ आचार्यमन्दिरे

भोगादेवानामपिदुर्ल्लभम् ॥ २० ॥ साधकउवाच ॥ चम्पिकावचनंसत्यंतवश
ब्दंमयाश्रुतम् ॥ सर्वैमयाप्रतिज्ञाचगंतव्यंशंकरालयम् ॥ २१ ॥ चम्पिको
वाच ॥ त्वच्छ्रुत्वावचनंतेषांगच्छाचार्ययथासुखम् ॥ मयात्वंपृच्छताचार्यकामि
न्योमदविह्वलाः ॥ २२ ॥ राधितोपिमयापूर्वेकामिनोमदविह्वलाः ॥ दिव्यवर्ष
सहस्राणितवतुष्टोमहेश्वरम् ॥ २३ ॥ महापन्थेनतेसिद्धा गच्छंतेतेस्वमध्यके॥
त्वयापादौप्रसादेनगृहमेकंचचम्पिकाः ॥२४॥ गृहीत्वाचंपिकामेकांप्रस्थित पंथ
मुत्तमम् ॥ साधकस्तिष्ठतेतत्रतस्यचित्तेसमुद्भवेत् ॥ २५ ॥ साधकउवाच ॥
ब्रूहिमेचम्पिकासत्यंकिंत्वयासुकृतंकृतम् ॥ एवंतुदिव्यलोकेस्मिनूउत्पन्नाकामरू
पिणी ॥ २६ ॥ चम्पिकोवाच ॥ त्वंलोकानांस्थिताचास्मिनूउत्पन्नाकामयाव

ना ॥ पूर्वाहंचम्पिकानामगृहंतिसाधकाश्चते ॥ २७ ॥ लोकेत्वद्वचनंश्रुत्वात्व
दृष्ट्वाचैवव्याकुलम् ॥ साधकउवाच ॥ क्वस्थानेस्वस्मिँल्लोकांश्चकिंपुण्यफलंल
भ्यते ॥ २८ ॥ क्वतीर्थंचप्रसादेनकिंगृह्णंतुचसाधकाः ॥ चम्पिकोवाच ॥ के
दारनामदेवस्यतत्रमन्दाकिनीनदी ॥ २९ ॥ केशेहंजूथिकानामलोकेयदिपराग
तिः॥लोकास्तांपावनंकृत्वाभक्तिभावसमन्विताः ॥ ३० ॥ नचेष्टाक्वगताज्ञातः
साधकैः सहसंस्थितम् ॥ तस्यतीर्थप्रसादेनाशिवसोपानमुत्थितम् ॥ ३१ ॥ अ
प्सरात्वंमयाप्राप्तंपूर्वंकामसमन्विता ॥ सर्वदेवसमोपेताराज्यंप्राप्तंमयाद्वनम् ॥
॥ ३२ ॥ महारुद्रप्रसादेनमहापन्थंप्रदायकम् ॥ केदारस्यैवपन्थेनयेमृताहिमचू
र्णिताः ॥ ३३ ॥ शूलहस्तांशिवाग्रेणभुंजंतिविपुलांश्रियम् ॥ एतन्मेचरणंसाधुगृ

हृणांतेमित्रबांधवाः ॥ ३४ ॥ तस्यतद्वचनंश्रुत्वाआचार्यसाधकैः सह ॥ त्यक्त्वा
तुचम्पिकालोकंगतास्तेउत्तरामुखम् ॥ ३५ ॥ ( इतिश्री केदारकल्पेईश्वरकार्ति
कसंवादे चम्पिकापुरीवर्णनो नाम एकविंशतिः पटलः ॥ २१ ॥ ) श्रीईश्वरउ
वाच ॥ योजनंशतकेनैवदृश्यतेपर्वतोत्तमम् ॥ उत्तुंगशिखरोनामसर्वरत्नविभूषि
तम् ॥ १ ॥ सुवर्णकास्तथावृक्षाः फलपुष्पसमन्विताः ॥ सप्तसागरपृथ्वीचगो
पदेमात्रदृश्यते ॥ २ ॥ पन्थंभयानकंदृष्ट्वाअघोरंजप्यतेमहत् ॥ अघोरंजप्यमा
नंचपथंदृष्ट्वाचनिर्मलम् ॥ ३ ॥ ओंहुंफट्स्वाहा ॥ अघोरोयंमहामंत्रोमहासिद्धि
करंनृणाम् ॥ महाविघ्नंहरेन्नित्यंसर्वपंन्थप्रदायकम् ॥ ४ ॥ मेरुशृंगेमहारुद्रंदिव्य
मालाकुलध्वजम् ॥ पश्यतांतस्यशैलस्यकलापूर्णसमापुरी ॥ ५ ॥ शतयोजनवि



२२

स्तीर्णैरत्नकांचनभूषितम् ॥ ब्राह्मणंवेदनिर्घोषैर्वैडूर्यमणिरश्मिभिः ॥ ६ ॥ ऋष
योयक्षगंधर्वाराववंस्तेपुरवासिनः ॥ इंद्रस्यतुपुरीदिव्याश्रूयतेकन्यकोतमा ॥ ७ ॥
ज्वलितापद्मरागस्यवैडूर्यमणिरश्मिभिः॥इंद्रनीलैर्महानीलैर्दृश्यतेचमनोहरम्॥८॥
तिष्ठंतिचततःसर्वेपुत्रदारासमन्विताः ॥ क्षीरोदधौयथाविष्णुःसंप्राप्तोदीर्घनिद्रया
॥ ९ ॥ तत्रस्थानेमहादेवंभुंजंतिविपुलांश्रियम् ॥ स्वयंतुष्टोमहादेवउमासार्द्धंत्रि
लोचनम् ॥ १० ॥ भेरीमृदंगशब्देनशंखतुर्य्यचवेणुका ॥ गीतंगायंतिगंधर्वावी
णावाद्यतिसुदरी ॥११॥ केचित्पक्षोपवासिनःकेचिन्मासोपवासिनः ॥ केचित्पुष्प
फलाहाराःकेचिन्मारुतभोजनाः ॥१२॥ अग्निहोत्ररताःकेचित्पूजयंतिचब्राह्मणान्
केचिन्तपःश्रमायंतेकेचिद्विपुलभोजनाः ॥१३॥ केचित्तपन्तिब्राह्मणाः केचिल्लो

काःपतंतिच ॥ केचिद्वपवनंशक्त्याकेचिद्ध्यानतपोरताः ॥१४॥ ऊर्द्ध्वपादस्थि
ताःकेचित्केचिच्चांद्रायणेरताः ॥ एकपादैःस्थिताः केचित्केचिदेकांगुल्यंगुष्ठयोः
॥ १५ ॥ एवंबहुविधालोकाअर्चयंतिमहेश्वरम् ॥ तेनकेचिन्महाप्राज्ञाउमासहि
तशंकरम् ॥ १६ ॥ भृगुर्मुनिर्नारदश्चवाल्मीकिःकश्यपस्तथा ॥ मरीचिर्मार्कंडेय
श्चदुर्वासाव्यासपंडिताः ॥ १७ ॥ ऋषिकन्यासमारूढाःदृष्ट्वाताश्चमयाधुना ॥
लक्ष्मीश्चसदृशाकारंपद्मिनीमृगलोचना ॥ १८ ॥ दिव्यवस्त्रपरीधानानानाचित्र
विचित्रिता ॥ नानागंधसुगंधाश्चकुंकुमादिरलंकृता ॥ १९ ॥ भूषितापद्मरागं
चहेमरत्यकंकणंकरे ॥ कट्यांक्षुद्रघंटिकाचहारनूपुरभूषिताः ॥ २० ॥ नलघूनदी
र्घंताचस्तनौचकरकुंभयोः ॥ एवंसर्वगुणोपेताऋषिकन्यामनोरमाः ॥ २१ ॥ सि

द्धांश्चआगतानूदृष्ठ्वागच्छंतीचसमीपत॥पश्यंतिसाधकाःसर्वेअनेकानिसहस्रशः
॥ २२ ॥ कन्यकोवाच ॥कभुवनागता॥सिद्धाःकस्थानेचैवगम्यते ॥साधकउवाच॥
आगतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ २३ ॥ यत्रस्थानेचकैलासेतत्रगच्छा
मिभामिनी॥ऋषीणांचसङ्घंदृष्ट्वाऋषिस्तुष्टास्समीहिताः ॥२४॥ ऋषिरुवाच ॥
कन्यकाश्चैवतिष्ठंतिसंख्यातस्यनविद्यते ॥ ताभिःसर्वस्यरूपाणिक्रीडंतिचयथा
सुखम् ॥ २५ ॥ साधकउवाच ॥ किंरूपंभोगमायुष्यंपश्चात्किंतुभविष्यति ॥ त
तःस्वरूपसंयुक्तंयावच्चन्द्रार्कतारकाः ॥ २६ ॥ ऋषिरुवाच ॥ भजंतिचमहाभो
गंमृत्युलोकेव्रजंतिच ॥ सर्वांगुणसमोपेताराजाभवतिधार्मिकः ॥ २७ ॥ सर्वका
मसमृद्धाश्चसर्वधर्मसमोद्याः ॥ सर्वक्रियासमाः सिद्धा जायंतेविपुलेकुले ॥

॥ २८ ॥ चक्रवर्तीभवेद्राजासर्वाचारोभवेच्छुचिः ॥ सर्वशास्त्रंभवेद्वक्ताभवेज्जा
तिस्मरोभुवि ॥ २९ ॥ साधकउवाच ॥ यदिपुण्यंमृत्युलोकेगंतव्यंचमहामुनिः ॥ २२
 इतिश्री केदारकल्पे ईश्वरकार्तिकसंवादेऋषिस्थानवर्णनोनाम द्वाविंशतिः पट
लः ॥ २२ ॥ ) श्रीईश्वरउवाच ॥ किंतत्रराजभोगेनशिवलोकेगमिष्यति ॥ सा
धकाः प्रणिताद्दृष्ट्वानिश्चयंचवरानने ॥ १ ॥ यौवनस्थामदोन्मत्तादिव्यभोग २३
स्यकुंकुमः ॥ नानाचित्रविचित्राणिपुष्पवस्त्रंचशोभितम् ॥ २ ॥ कन्यकाश्चैव
तांस्त्यक्त्वाउत्तराभिमुखंगताः ॥ ध्वजाश्चदृश्यंतेतत्रहेमस्तंभपरिच्छदाः ॥ ३ ॥
संप्राप्ताः साधकास्तत्रऋषिंदृष्ट्वाअधोमुखम् ॥ तस्यस्तंभसमोपेतादृष्ट्वातत्र
महामुनिः ॥ ४ ॥ मुनिरुवाच॥ किमर्थंतिष्ठतेतत्रऊर्ध्वपादमधोमुखम् ॥ हेमस्तं 

भंततोदृष्ट्वासर्वरत्नविभूषितम् ॥ ५ ॥ अर्द्धयोजनविस्तीर्णंउच्छायोदशयोजन
म् ॥ चंद्रादित्यसमंज्योतिः छायातस्यसुशीतलम् ॥ ६ ॥ इन्द्रनीलैर्महानीलैः प
द्मरागैः सुशोभितम् ॥ ध्वजमालाकुलंदिव्यंनानारत्नोपशोभितम् ॥ ७ ॥ ज्वलं
तिपद्मरागस्यस्फुरंतिकिरणोज्वलाः ॥ तस्यशृंगंमहादिव्यंशोभतेधवलंगृहम् ॥
॥ ८ ॥ तस्यमध्येमहालिंगंज्योतीरूपंसनातनम् ॥ अप्सरास्थापितंलिंगंउमास
हितशंकरम् ॥ ९ ॥ पूजयंतितथाकंन्यात्रिकालेभक्तवत्सलम् ॥ नृत्यंतिचाप्सरा
स्तत्रगायंतिक्रीडयंतिच ॥ १० ॥ प्रोक्षणीयंप्रकुर्वंतिशंखतुर्यंचवेणुका ॥ गीतंगा
यंतिगन्धर्वाअर्चयन्तिमहेश्वरम् ॥ ११ ॥ हेमपुष्पैर्महापद्मैरर्चिंतासुरनेकधा ॥
अगरैर्धूपनंचैवपुष्पैः कर्पूरमिश्रिताः ॥ १२ ॥ धूपितंदेवदेवस्यअतिगन्धंमनोह

रम् ॥ आर्तिकंचप्रकुर्वंतिधूपदीपसमाकुलैः ॥ १३ ॥ पटहंवेणुवाद्यंचवाद्यंतेबह्व
नेकधा ॥ चन्दनागरुकर्पूरदिव्यधूपैस्तुधूपिता ॥ १४ ॥ तस्यशृंगेमहासेनगता
स्तेसर्वसाधकाः ॥ अर्चयित्वामहादेवंहेमपुष्पस्तुफुल्लयेत् ॥ १५ ॥ आर्तिञ्चैव
प्रकुर्वंतिकर्पूरागरुचन्दनैः ॥ ततस्तेसाधकाः सर्वेउतीर्णास्तत्रतिष्ठंति ॥ १६ ॥
ततोदृष्ट्वामुनिश्रेष्ठंसाधुर्वचनमब्रवीत् ॥ मयादृष्ट्वामहादुःखंभवेद्यस्मिन्तपःकृ
तः ॥ १७ ॥ ऊर्ध्वपादउवाच ॥ पूर्वजन्मकृतंपापंऊर्ध्वपादअधोमुखम् ॥ मृत्यु
लोकेअहंजातोराजाहंमंडलेश्वरम् ॥ १८ ॥ पूजितोहिमहादेवोनविष्णुर्नार्चितोम
या ॥ श्रीविष्णुंपूजयेन्नैवप्रसंगेनगतोमया ॥ १९ ॥ विष्णुनास्थापितास्तत्रअ
धोमुखंकृतंतदा ॥ साधकउवाच ॥ अस्मिस्थानेपुरीसर्वेगणगन्धर्वदेवता ॥२०॥

अप्सरायोषिताः सर्वैर्भुंजंतेविपुलांश्रियम् ॥ एकाकीचमुनिश्रेष्ठदुःखसागरपीडि
तः ॥ २१ ॥ क्वकालेचभवेन्मोक्षंभविष्यसिमहामुनिः ॥ ऊर्ध्वपादउवाच ॥ को
टिसिद्धागमिष्यंन्तिममोक्षंभविष्यति ॥ २२ ॥ चांद्रायणंभवेत्तत्रतदामोक्षंभ
भवेन्मम ॥ आकाशंपन्थमारूढाः पश्यंतिहेममन्दिरम् ॥२३॥ तत्रशांतामहाका
यामेरुपृष्ठेसमाकुलम् ॥ दिव्यदेहसमोभूत्वाअग्निज्वालासमप्रभाः ॥ २४ ॥ अ
स्तियत्रसुवर्णस्यनानारत्नान्वितस्यच ॥ मौक्तिकंचंद्रकांतिश्चप्रासादाविविधास्त
था ॥ २५ ॥ संप्राप्ताः साधकास्तत्रगृहद्वारमुपस्थिताः ॥ पश्यंतुदक्षिणेपार्श्वेपृ
थिव्यांतिलकंयथा ॥ २६ ॥ हंससारसनादेनवदंतिचसुरोत्तमम् ॥ देवमानवगंध
र्वाः पश्यंतिममसाधकाः ॥ २७ ॥ इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादे ऊर्ध्व

पादस्थानवर्णनोनाम त्रयोविंशतिमः पटलः ॥ २३ ॥ ग्रहउवाच ॥ क्वभुवना
गतासिद्धाः क्वस्थानंचैवगम्यते ॥ साधकउवाच ॥ आगतामृत्युलोकाच्चगंत
व्यंशंकरालयम् ॥ १ ॥ ग्रहस्यवचनंश्रुत्वासाधकाविस्मयंगताः ॥ येनदृष्ट्वातु
तावापिनकस्यवदनेगृहम् ॥ २ ॥ ततः प्रीतास्तुतिंसिद्धादृश्यंतेनमहागृहम् ॥
गृहसंबंधिनोयस्यसर्वलक्षणसंयुतम् ॥ ३ ॥ हेममायासुखंस्त्रीणांसर्वालंकारभूषि
तम् ॥ भुक्त्वोदितेमहाभोगावैडूर्यमणिमध्यके ॥ ४ ॥ गवाक्षशतसंकीर्णनाना
विहंगसेविताः ॥ गंधर्वाः किन्नराः सिद्धानागानांशोभिताः शिवम् ॥ ५ ॥ पुरं
दरगृहस्यैवप्राकारंशतमाकुलम् ॥ पदंपश्यतिनाचार्यमेतत्कांचनवद्गृहम् ॥ ६ ॥
उच्चैस्तुसाधकाः सर्वेकिमिदंचैवदृश्यते ॥ नमानुष्यानदेवाश्चनयक्षानचराक्षसाः

॥ ७ ॥ किन्नरानचगंधर्वाः संपूर्णैः सदृशीर्ष्टंनाः ॥ आस्थितामवनेतेवैअधऊर्ध्वं
दिशोदश ॥ ८ ॥ भमनाथकुलैर्गत्वाउदधेर्दक्षिणेतटे ॥ स्वपाणिनापथस्तेभ्यो
महादेवस्यसाधुना ॥ ९ ॥ पान्थिकउवाच ॥ किमर्थंसाध्यतेदेवंमहादेवेनभोगृह
म्॥कथयस्वममाचार्यमहाकौतूहलंहिमे ॥ १० ॥ गृहउवाच ॥ ईश्वरस्यस्वयंलिं
गंप्रकाशितंतयोर्मुनिः ॥ समुत्थंवैश्रुतेर्नित्यंसमुद्रस्यसमीपतः ॥ ११ ॥ तेनैवक्रि
यतेस्वामीगृहस्यसततंवदेत् ॥ यत्रस्थानेनसंक्रोधएतत्पश्यंतुकारणम् ॥ १२ ॥
आस्थित्वातत्रवैतावत्ईशान्यांदिशिचोत्तमम् ॥ आचार्येणचसंयुक्तंयत्राप्तःपार्व
तीपतिः ॥ १३ ॥ ऋषीश्वरोनंदीनामसर्वशास्त्रविशारदः ॥ तेनाहंनिर्मिताः सि
द्धागृहंवैस्फाटिकंभवेत् ॥ १४ ॥ कांत्यागत्यचपुष्पार्थंगत्वाक्षीरोदसागरे ॥ या

69

वद्वदंतितेसिद्धाः नंदीनांगृहमागताः ॥१५॥ राजिहैंम्नैवपुष्पैश्चमुक्तापंकजपूरि
का ॥ कृतांजलिपुटोभूत्वासिद्धान्वचनमब्रवीत् ॥ १६ ॥ नन्दिकेश्वरउवाच ॥
स्वागतंभोमहासिद्धादुर्ल्लभंतवदर्शनम् ॥ दुष्कृतंकृतकर्माणिएकाकीविचराम्य
म् ॥ १७ ॥ साधकउवाच ॥ ततः पृच्छाम्यहंब्रूहिकिंत्वयादुष्कृतंकृतम् ॥ एका
कीतिष्ठतेतत्रसर्वलोकविवर्जिताः ॥ १८ ॥ नन्दिकेश्वरउवाच ॥ उद्यानंजलमा
भावः पुरीपन्थेनमेस्थिताः ॥ पूर्वकर्मविपाकेनलिंगमुत्पाटितंमया ॥ १९ ॥ वि
ङ्वसंतियथानागंसर्वलोकविवर्जितम् ॥ भुंजंतिसर्वकर्माणिह्येकास्तिष्ठाम्यहंवने ॥
॥ २० ॥ ब्रह्महत्यासहस्राणिनानाकर्मकृतानिच ॥ कोटिःसार्द्धंचकंन्यानांगोवधं
कोटिमेवच ॥ २१ ॥ उत्पातंचभवेत्तस्यालिंगमुत्पाटितंकृतम् ॥ तेनपापेनसंयुक्तं

नतेयांतिशिवालयम् ॥ २२ ॥ साधकउवाच ॥ कस्मिन्कालेभवेन्मोक्षंतन्मेब्रूहि
महामुनि· ॥ मुनिरुवाच ॥ कोटिसिद्धेगमिष्यामिममोक्षंभविष्यति ॥ २३ ॥
पूर्वकर्मविपाकेनएतत्पापंकृतंमया ॥ साधकउवाच ॥ यादृशंस्फुटितंलिंगंदग्धंखं
डितमेवच ॥ २४ ॥ सुकृतंदुष्कृतंचैवशिवलिंगंनचालयेत् ॥ एवमुक्तायथासिद्धा
वेगेनपवनोयथा ॥ २५ ॥ प्रस्थिताः सर्वसिद्धाश्चगच्छन्तेउत्तरांदिशम् ॥२६॥
( इतिश्री केदारकल्पे ईश्वरकार्तिकसंवादे उद्यानानंदीस्थानवर्णनोनाम चतुर्विं
शतिः पटलः ॥ २४ ॥ ) श्रीईश्वरउवाच ॥ ओंतत्तत्स्थानेस्वयंगता आकाशेउत्त
रांदिशम् ॥ ईशानसदृशंदृष्ट्वाध्वजमालाकुलंमहत् ॥ १ ॥ हेमलिंगंमहत्कूटे
वध्वादृष्ट्वाचकांचनैः ॥ द्वादशादित्यतेजाढ्यंनानारत्नोपशोभितम् ॥ २ ॥ सह

स्रयोजनविस्तीर्णंउच्चकंशतयोजनम् ॥ महद्दिव्यंमनोरम्यंमहागिरिवरोत्तमम् ॥
॥ ३ ॥ तस्यमध्येपुरीरम्यानानारत्नसमाकुलम् ॥ अप्सरास्थापितंलिंगंपद्मरा
गोपशोभितम् ॥ ४ ॥ पूजयंतिसुराः सर्वेत्रिकालंभक्तवत्सलम् ॥ त्रिंशत्कोटिस
हस्राणिपूजयंतिकन्यकोत्तमम् ॥ ५ ॥ भेरीमृदंगशब्देनशंखकोलाहलैस्तथा ॥
दुंदुभिः शंखनिर्घोषैः पटलैर्मर्दलैस्तथा ॥ ६ ॥ वंशीवादित्रनादैश्चदिव्यपुष्पं
चशोभितम् ॥ चंदनागरुकर्पूरंदेवद्वारफलैस्तथा ॥ ७ ॥ आगताःशंखपालैश्चये
चान्येपुष्पवासितम् ॥ आगताश्चस्वयंसिद्धाद्वारेतिष्ठंतिसाधकाः ॥ ८ ॥ पुरम
ध्येगृहंतस्यबालार्कसदृशप्रभम् ॥ उत्तुंगशिखराकारंप्राकारंतोरणान्वितम् ॥९॥
कपाटार्गलसंयुक्तंवेष्टितंपुरमुत्तमम् ॥ द्वारेकपाटशब्देनद्वारपालेनधीमता ॥१०॥

महावीरामहासिद्धामहाबलपराक्रमम् ॥ शंकरोतिमहत्त्रासंसिद्धानांचमहाबलिः॥
॥ ११ ॥ तत्रैतचभयंदृष्ट्वाभयंतस्यनविद्यते ॥ प्रतीहारउवाच ॥ अघोरायम
हादृष्ट्वासर्वेषांचपलायनम् ॥ १२ ॥ तस्यतद्वचनंश्रुत्वाअघोरंचाक्षरंजपेत् ॥
श्रींश्रींश्रींहुंहुंहुंफट्स्वाहा ॥ अघोरोयंमहामंत्रः अघोरंदेवदुर्ल्लभम् ॥ १३ ॥ अ
घोरंजप्यमानस्तुप्रतीहारावदंतिच ॥ प्रतीहारउवाच ॥ भीतस्तुजप्यतेमंत्रः स
र्वशत्रुक्षयंकरः ॥ १४ ॥ अघोरंजप्यमानस्तुअघोरंदेवदुर्ल्लभम् ॥ सौम्यरूपांम
हामूर्तिंप्रतीहारावदंतिच ॥ १५ ॥ स्वागतंचमहासिद्धः सर्वालंकारभूषितः ॥
तस्यतद्वचनंश्रुत्वाकपाटोत्पाटयंतिच ॥ १६ ॥ सर्वेतत्रसमाख्याताकन्यातुष्टाच
हर्षति ॥ कन्यकोवाच ॥ क्वभुवनागतासिद्धाः क्वस्थानेचैवगम्यते ॥ १७ ॥

साधकउवाच ॥ आगतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ कन्यकोवाच ॥ श्रु
त्वापार्थमहाप्राज्ञः रुद्रभक्तोमहातपाः ॥ १८ ॥ देवीपद्मावतीनामइयंभुंजतिसा
 पुरी ॥ प्रवेशंचपुरंरम्यंनानास्त्रीभिरलंकृतम् ॥ १९ ॥ प्रवेशेचपुरीरम्यानानार
त्नोपशोभितम् ॥ नृत्यंगीतंतथाकृत्वाआचार्य्यंदेवस्वागतम् ॥ २० ॥ पद्माव
त्युवाच ॥ क्वभुवनागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ साधकउवाच ॥ आ
गतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ २१ ॥ पद्मावत्युवाच ॥ तिष्ठंतुसाध
काः सर्वेमांवांछंतुमहापथे ॥ कामरूपीस्त्रियः सर्वाजरामृत्युविवर्जिताः ॥ २२ ॥
देवौहरिहरौब्रह्माद्यइयंतेस्मिन्पुरेसदा ॥ आगच्छंतिचतुर्दिक्षुसर्वेतीर्थार्थकांक्षिणः ॥
॥ २३ ॥ कार्तिकस्यतुमासेतुअमावस्यायदाभवेत् ॥ एवंभवतुकेदारंदेवानामपिदु

ल्लभम् ॥ २४ ॥ मन्दाकिनिमहानद्यांस्नात्वाचेन्तुपिबंतिच ॥ पश्यंतितेमहादेवं
कैलासंसुरमंदिरम् ॥ २५ ॥ साधकउवाच ॥ यदिदेवंचपश्यामिस्थितोवैनिश्चयं
मम ॥ अवश्यंतत्रगंतव्यंकैलासेमेरुमंन्दिरे ॥ २६ ॥ ततोदेवंविरूपाक्षंपश्यंति
साधकोत्तमाः ॥ प्रातिमालक्षणोपतांचंद्रकांतिसमप्रभाम् ॥२७॥ कट्यांचनागवंधं
चकर्णयोः कुंडलेतथा ॥ तांदृष्ट्वाचमहाप्राज्ञोमनसिनैवरुच्यते ॥२८॥ तस्यत
द्वचनंश्रुत्वाप्रस्थिताःसर्वसाधकाः ॥ संप्राप्तेप्रतिमांदृष्ट्वाविमानानिदिशोदश
॥ २९ ॥ विमानानिसहस्राणिआकाशस्यसमाकुलम् ॥ गणगंधर्वसंकीर्णंदेवगंध
र्वयोषिताः ॥ ३० ॥ इन्द्रकंन्यादेवकन्याहारिकन्यास्तथैवच ॥ दिव्यालंकारसंयु
क्तांदिव्यगंधानुलेपनाम् ॥३१॥ विमानानिसमारूढाःअप्सरानृत्यतत्परम् ॥ रत्न

वद्धाविमानानिविमानास्तेचकामनाः ॥ ३२ ॥ आगतास्तेततःकन्यासपुष्याश्च
विमानगाः ॥ शंखदुंदुभिनिर्घोषैःकाहलैर्भेरिमर्दलैः ॥ ३३ ॥ पटहैर्वेणुवाद्यैश्च
 भेरीशृंगंचनादितम् ॥ दुंदुभिस्तालशब्दैश्चवाद्यानिविविधानिच ॥३४॥ एतैस्तु
साधकादेवाविमानारूढमागताः ॥ चामरैर्वीज्यमानंचछत्रंचोपरिधारितम् ॥ ३५ ॥
गीतंगायंतिगंधर्वावीणावाद्यतिसुंदरी ॥ संपूर्णचंद्रवदनारूपयौवनगर्विताः ॥३६॥
दिव्यवस्त्रपरीधानंदिव्यगंधानुलेपनम् ॥ करकंकणसंयुक्तानागवल्लीविभूषितम् ॥
॥ ३७ ॥ अशोकफलहस्ताचवदंतिकोकिलास्वरम ॥ यौवनस्थामदोन्मत्ताःसर्व
शास्त्रविशारदाः ॥ ३८ ॥ यत्रस्थानेमहासाधुसर्वशास्त्रसमागम् ॥ आगताश्च
सुराःसर्वेगणगंधर्वदेवताः ॥ ३९ ॥ श्रीदेव्युवाच ॥ शृणुसाधुमहाप्राज्ञएकचि 

तोऽप्यवस्थितः ॥ दर्शनेचत्वयासर्वेआगताःसुरदेवताः ॥४०॥ मयाचप्रेरिताः सर्वेविष्णुर्ब्रह्ममहेश्वराः॥देवदेवंजगन्नाथंशिवलोकेव्रजाम्यहम् ॥४१॥ वदंतिदेवताः सर्वेविमानारूढसाधकाः ॥ आचार्यउवाच ॥ विमानानिनरुच्यंतेसत्यंसत्यंवदाम्यहम् ॥ ४२ ॥ देवदेवंजगन्नाथंदुर्ल्लभंतवदर्शनम् ॥ शंकरस्यप्रसादेनगुरुधर्मबलेनच ॥४३॥ तस्यपद्भ्यांनमस्कारंविमानानिनसंशयः॥वदंतिसाधकाः सर्वेपूजयित्वाप्रयत्नतः ॥ ४४ ॥ तत्रस्थानेमहादेवसाधकाः परिवेष्टिताः ॥ एकदेवसमोरुद्रः कैलासेगम्यतेध्रुवम् ॥४५॥ पुनश्चचोत्थिताः सिद्धागच्छंतिह्युत्तरांदिशम् ॥ ४६ ॥ इतिश्री केदारकल्पे ईश्वरकार्तिकसंवादेपद्मावतीपुरीवर्णनोनाम पंचविंशतिः पटलः ॥ २५ ॥ ) श्रीईश्वरउवाच ॥ ओंअग्रतोदृश्यतेतत्रअतिर

म्यंमनोहरम् ॥ दृश्यतेपुरींविस्तीर्णांमुदितार्कसमप्रभाम् ॥ १ ॥ इन्द्रस्यचपुरी
रम्यागतास्तत्रचसाधकाः ॥ अस्मिन्गृहेमहादिव्याः पद्मरागमयानिच ॥ २ ॥
देवताः पूजयिष्यामिकामरूपामहाबलाः ॥ ततश्चशान्तरूपाणिदृश्यतेपुरीमुत्त
माम् ॥ ३ ॥ तत्रस्थानेचयेवृक्षाः सर्वेकालंफलंतिच ॥ नदीवहातितत्रैवघृतंक्षीरं
चचामृतम् ॥ ४ ॥ भेरीमृदंगशब्देनशंखकाहलमर्दलैः ॥ महागंभीरनिः स्वरैर्वा
द्यंतेबहुयंत्रिणः ॥ ५ ॥ वाद्यंतेतानिनिर्घोषैर्वंशवादित्रनादितम् ॥ उत्साहंदृश्यते
तत्रपदेपदेमहापथे ॥ ६ ॥ ध्वजाश्चनिर्मलास्तत्रपद्मखंडैश्चमंडिताः ॥ तत्रश
ब्दंमहानादंदीर्घवर्णनिनादितम् ॥ ७ ॥ तत्रतत्रासितासिद्धाः अघोरंजप्यतेमह
त् ॥ ओंहुंफट्स्वाहा ॥ अघोरंजप्यतेतत्रभयंनश्यतितत्क्षणात् ॥ ८ ॥ क्रोशमा

त्रंप्रमाणंचहैमंनैवतुदृश्यते ॥ हेमस्तंभंततोदृष्ट्वाउच्चायोनिः सयोजनम् ॥९॥
हेमस्तंभानुसंलग्नंघंटाचामरभूषितम् ॥ ध्वजाकारंसतेजाढ्यंसर्वरत्नविभूषितम्॥
॥ १० ॥ गृहमध्येचहिंदोलंघंटाघुर्घुरभूषितम् ॥ भूषितादिव्यगन्धैश्चदिव्यवस्त्र
परिच्छदाः ॥ ११ ॥ दिव्यपुष्पंशिरोवध्वाहारनूपुरभूषितम् ॥ भूषितापद्मरागै
श्चहेमस्यकंकणंकरे ॥ १२ ॥ हिंदोलयंतिताः कन्याजरामृत्युविवर्जिताः ॥ संप्रा
प्तायौवनस्थानेभाषयंतितपस्विनीम् ॥ १३ ॥ तपःस्विन्युवाच ॥ नामघोषाव
तीदेवीभुंजतिविपुलांश्रियम् ॥ योजनंशतविस्तीर्णंबंधकांचनसन्निभम् ॥ १४ ॥
पुरमध्येमहासैन्यंरम्यंपर्वतसन्निभम् ॥ विस्फुरंतिचविस्तीर्णंनानारत्नसमाकुलम्
॥ १५ ॥ तत्रातिष्ठतिसादेवीशंकरेणचनिर्मिता ॥ लक्ष्म्याचसदृशंरूपंसर्वालंका

रभूषितम् ॥ १६ ॥ संप्राप्तेचगृहद्वारेप्रतीहारावदंतिच ॥ महाबुद्धिर्महाराजाय
क्षकानांमहातपाः ॥ १७ ॥ साधकाश्चप्रवक्ष्यामिसर्वपापैः प्रमुच्यते ॥ तस्यत
द्वचनंश्रुत्वाप्रस्थिताः सर्वसाधकाः ॥ १८ ॥ अभिवाद्यततोदेवींवंदेघोषावतींत
था ॥ घोषावत्युवाच ॥ क्वभुवनागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ १९ ॥
साधकउवाच ॥ आगताम्मृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ घोषावत्युवाच ॥
शृणुसाधकतत्त्वेनममवाक्यंसुनिश्चितम् ॥ २० ॥ राजाचित्ररथोनामचक्रवर्तीम
हाबलः ॥ पुरेदेवेततः सिद्धश्चागतःपुनरब्रवीत् ॥ २१ ॥ अहमीश्वरपार्श्वेतु
आगत्याप्टच्छयाकृतम् ॥ घोषावतीपुरीनामतिष्ठंतिसाधकास्तथा ॥ २२ ॥ सिंहा
सनानिदिव्यानिहेमरत्नविभूषितम् ॥ रम्यंतेकन्यकाः सर्वेसर्वशास्त्रविशारदाः ॥

॥ २३ ॥ यौवनस्थामदोन्मत्ताःहारनुपूरभूषिताः ॥ संपूर्णचंद्रवदनाविस्फुरंतीचते
जसा ॥ २४ ॥ मत्तमातंगगाभिन्यःप्रचलंतिपदेपदे ॥ नमंतिस्तनभारेणजराम्
त्युविवार्जिताः ॥ २५ ॥ भुंजंतिविपुलान्भोगान्रूपयौवनगर्विताः ॥ एकैवपुरी
सिद्धाश्चसिद्धाः भुजंतिचापरम् ॥ २६ ॥ राज्यभोगसमोपेतांजराम्त्युविवार्जि
ताम् ॥ साधकउवाच ॥ अस्मिन्पुरेनमेकार्यंकन्याभिर्नमहामुने ॥ २७ ॥ अवश्यं
तत्रगंतव्यंयत्रदेवोमहेश्वरम् ॥ घोषावत्युवाच ॥ स्वर्गलोकेचयेभोगाः कैलासस
दृशंगृहम् ॥ २८ ॥ अत्रैवतुप्रतिष्ठंतिकिमर्थंतत्रगम्यते ॥ देवोहरिहरोब्रह्मादृ
श्यंतेस्मिन्पुरेसदा ॥ २९ ॥ चित्रराजोवाच ॥ यदिनरुच्यतेसिद्धाः गंतव्यंनैव
शक्यते ॥ तदापन्थसमारूढाः पश्यंतितत्रसाधकाः ॥ ३० ॥ पंचैतेसाधकाः स

वेंगंतव्यमुत्तरांदिशम् ॥ ( इतिश्री केदारकल्पेईश्वरकार्तिकसंवादेचित्रस्थघोषा
वतीपुरीवर्णनोनाम षड्विंशतिः पटलः ॥ २६ ॥ ) श्रीईश्वरउवाच ॥ ओंउत्त
रेदिग्विभागेचयोजनत्रयंगम्यते ॥ मंदाकिनीनदीतत्र अतिरम्यंमनोहरम् ॥ १ ॥
लहरीतरंगगंभीरंफेनावर्त्तसमाकुलम् ॥ उभयोस्तटयोः पार्श्वेसर्वलोकइदंबभौ ॥
॥ २ ॥ तत्रहेममयाभूमिः यत्रस्थावहतिनदी ॥ सुवर्णवालुकास्तत्रसुवर्णस्यचपं
कजम् ॥ ३ ॥ शुद्धस्फटिकसंकाशंशतपुष्पफलोत्तमम् ॥ देवताश्चस्वरूपेणातिष्ठं
तिकामरूपिणीः ॥४॥ सुवर्णपक्षिकास्तत्रवसंतिआजरामरम् ॥ संप्राप्ताः साध
कास्तत्रनदीचपापनाशिनी ॥ ५ ॥ साधुसाधुमहाप्राज्ञः पुनः साधुर्महातपाः ॥
एवंवदंतितेवृक्षाबुद्धिंदास्यंतिसाधकाः ॥ ६ ॥ एवंमंदाकिनींपुण्यांपूजयित्वामहे

श्वरम् ॥ अष्टोत्तरशतंमंत्रंअघोरंजप्यतेमहत् ॥ ७ ॥ ओंहुंफट्स्वाहा ॥ जपि
त्वातस्यमंत्रेणस्तूयतेशंखयोर्ध्वनिः ॥ अग्रेऐवचपश्यंतिईशान्यांदिशिसन्मुखे ॥
॥ ८ ॥ अघोरोयंमहामंत्रोमहापातकनाशनः ॥ महाविघ्नंहरेन्नित्यंमहासिद्धिप्र
दायकम् ॥ ९ ॥ सन्मुखंपश्यंतेसिद्धाः दृश्यतेपंथमुत्तमम् ॥ गच्छंतितेनमार्गेण
साधकाः पवनोयथा ॥ १० ॥ आश्रमंदृश्यतेरम्यंध्वजमालाकुलंमहत् ॥ पश्यं
तुसाधकाः सर्वेत्रिपथोनामदृश्यते ॥११॥ तत्रप्राप्ताश्चयेसिद्धास्तिष्ठंस्तिक्षणमे
वच ॥ उत्तरांदिशिभागेषुईशान्येदिशिसन्मुखे ॥ १२ ॥ तत्रपश्यंतितेसिद्धाः कै
लासंनामपर्वतम् ॥ शंकरस्यप्रियंनित्यंसर्वदेवालयंमहत् ॥ १३ ॥ श्वेतवर्णोगि
रिः सर्वःसन्धिभेदविवर्जितम् ॥ अर्द्धार्द्धमंडलाकारंमध्येस्थूलोमहागिरिः ॥१४॥

मृदंगकृतरूपेणदृश्यतेपर्वतोत्तमम् ॥ अष्टाशीतिसहस्राणिउच्चैस्तुयोजनंभवेत्॥
॥ १५ ॥ त्रिंशच्छतसहस्राणिविस्तारंचप्रकीर्तितम् ॥ पर्वतंचमहारम्यंसूर्यकोटि
समप्रभम् ॥१६॥ गृहाणिस्थितंतत्रैवसहस्रयोजनानिच॥ नाम्नाचधारणंदिव्यंना
नारत्नविभूषितम् ॥ १७ ॥ श्वेतपीतस्तथारक्तंकृष्णंचकर्बुरस्तथा ॥ पंचवर्णप
ताकावैदृश्यंतेपवनेरिताः ॥१८॥ स्तंभाहेममयाः सर्वेचन्द्रकांतिसप्रभम् ॥ कन्य
कास्तत्रतिष्ठंतिसुखरूपाः समंततः ॥१९॥ यथासामर्थ्यंरुद्रस्यतथासामर्थ्यमंदि
रे ॥ गृहेस्मिन्संस्थिताःकन्याहेमालंकारभूषितम् ॥ २० ॥ त्रिनेत्रंदशभुजंचन्द्रा
र्द्धकृतशेखरम् ॥ गणगन्धर्वसंकीर्णंसर्वशास्त्रविशारदाः ॥ २१ ॥ मुनयःसहिता
कन्यागंधर्वासुरपन्नगाः ॥ दशभुजंत्रिनेत्रंचात्रिशूलंकरपल्लवम् ॥ २२ ॥ अ

जरामरणंवृक्षाःकैलासस्यमहाबलाः ॥ अतिकोलाहलःशक्त्यासत्यंवासींचविद्यते
॥ २३ ॥ संप्राप्ताःसाधकास्तत्रकैलासंचसमीपतः ॥ दृष्ट्वाश्रुत्वाचतद्रूपंसाध
काविस्मयंगताः ॥ २४ ॥ गोदोहमात्रदेहाश्चमूर्च्छिताःपापकिल्विषाः ॥ पुनस्ते
चततःप्रप्ताआघोरंजप्यतेमहत् ॥ २५ ॥ अघोरोयंमहामंत्रःसर्वविघ्नक्षयंकरः ॥
अष्टोत्तरशतंतत्रअघोरंजप्यतेमहत् ॥ २६ ॥ ॐह्रुंफट्स्वाहा ॥ अघोरंजपयि
त्वातुपुनःपश्यामहेगिरिम् ॥ जयंजयंचकुर्वंतिसाधकावंदतेध्रुवम् ॥ २७ ॥ याव
त्पश्यंतितेसिद्धादृश्यंतेपंथमुत्तमम् ॥ पृच्छंतिसाधकाःसर्वेआचार्यंब्रूहिसत्पते ॥
॥ २८ ॥ कुत्रचैवतुगंतव्यंपंथानंचपृथक्पृथक् ॥ आचार्यउवाच ॥ ब्रह्मणःशंक
रस्यैवविष्णुलोकायथोत्तरे ॥ २९ ॥ धातुर्हरेरीशानस्यत्रयोमार्गाःप्रकीर्तिताः ॥

साधकउवाच ॥ ब्रह्मलोकेचयेभोगाःविष्णुलोकेतथास्म्यहम् ॥३०॥ कथयामि
विशेषेणतथापिचकथांशृणु ॥ विष्णुलोकेचयेभोगाःकथयामिप्रयत्नतः ॥ ३१ ॥
रुद्रलोकेचयेभोगाःकथयामिकथामिमाम् ॥ आचार्यउवाच ॥ ब्रह्मलोकेचयेभोगा
रूपवान्सप्रयत्नतः ॥ ३२ ॥ रुद्रलोकेचयेभोगास्त्रयोभोगायथाशृणु ॥ ब्रह्मलो
केचयेभोगाःकथयामिशृणुष्वते ॥ ३३ ॥ चतुर्वेदीभवेद्वक्ताब्राह्मणीसदृशाःस्त्रियः॥
नानालक्षणाश्चाप्सराश्चविमानाःसर्वकामिनी ॥३४॥ शतयोजनविस्तीर्णमुच्चा
यश्चचतुर्गुणम्॥इंद्रनीलैर्महानीलैः पद्मरागोपशोभितम्॥३५॥ब्रह्मलोकेचयेयांति
ब्रह्मणोस्यसमायुतम् ॥ कस्मिन्कालेतुसंप्राप्तेमृत्युलोकेव्रजंतिच ॥३६॥ सर्वका
मसमृद्धाश्चजायंतेविपुलेकुले ॥ सर्वेगुणसमोपेताराजानश्चभाविष्यति ॥ ३७ ॥

स्मरंतिपूर्वंपितरंस्मरंतिचमहापथे ॥ उत्तमेचकुलेजन्मभवेज्जातिस्मरोभवेत् ॥
॥ ३८ ॥ विष्णुलोकेचयेभोगान्कथयामिकथांशृणु ॥ शंखचक्रगदाहस्तेशार्ङ्ग
धन्वागदाधराः ॥ ३९ ॥ चतुर्भुजाश्चमाहात्म्यंश्यामवर्णामहाद्युतिः ॥ विजया
श्चसुराः सर्वेयथादेवोजनार्दनः ॥ ४० ॥ लक्षद्वयसहस्राणिकन्याश्चैवचतुर्भुजाः॥
यौवनस्थामदोन्मत्तागजलीलासुगामिनीः ॥४१॥ लक्ष्म्यंचसदृशीः सर्वासर्वालंका
रभूषिताः ॥ विमानाःकामिनीर्दिव्यंपद्मरागोपशोभिताः॥४२॥ वसंतिवैविष्णुलो
केक्रीडंतिसाधकैः सह ॥ कस्मिन्कालेतुसंप्राप्तेमृत्युलोकेव्रजंतिच ॥ ४३ ॥ च
क्रवर्तीमहाराजाभवेज्जातिस्मरोभवेत् ॥ पुत्रपौत्रसमायुक्तंधनधान्यसमा कुलम्
॥ ४४ ॥ सर्वकामसमृद्धाश्चजायंतेविपुलेकुले ॥ सर्वगुणसमोपेताः राजाभवति

धार्मिकः ॥४५॥ दीर्घायुर्विपुलान्भोगान्महाबलपराक्रमः ॥ द्वारेतिष्ठंतिसैन्याश्च
हयैर्मान्यैरनेकधा ॥ ४६ ॥ एवंजन्मभवेद्राजाजीवमानोनसंशयः ॥ सुनारीभिः
सुपुत्रैश्चपूर्णचंद्रविभाविनी ॥ ४७ ॥ एतानिचमहासेनपुरापश्यन्महापथे ॥ शिव
लोकचयेभोगाःकथयामिकथांशृणु॥४८॥त्रिनेत्रादशभुजाश्चचंद्रार्द्धकृतशेखराः॥
विमानाः कामिकाश्चैवचंद्रादित्यसमप्रभाः ॥ ४९ ॥ त्रिशूलंवरहस्तेनगणगंधर्व
सेविताः ॥ कैलासपीठमध्येचयत्रदेवोमहेश्वरः ॥ ५० ॥ यावन्नंदीमहाकायाया
वन्तोगणकोटयः ॥ उमामाहेश्वरावग्रेक्रीडंतेचैवसाधकाः ॥ ५१ ॥ कोट्यप्सरास्
सहस्राणिहारनूपुरभूषिताः ॥ सर्वशृंगारशोभाढ्यानूपुराभिरलंकृताः ॥ ५२ ॥ अ
प्सरायौवनाःसर्वेउमयासदृशोपमम्॥दिव्याःसुवस्त्रधार्यश्चदिव्यभोगपरिच्छदाः ॥

॥ ५३ ॥ सर्वभोगसमायुक्तंक्रीडंतेशिवसन्निधौ ॥ कस्मिन्कालेतुसंप्राप्तेमृत्युलो
केव्रजाम्यहम् ॥ ५४ ॥ सर्वकामसमृद्धाश्चजायंतेविपुलेकुले ॥ सर्वगुणसमोपे
ताराज्ञोभवंतिसाधकाः ॥ ५५ ॥ पुत्रपौत्रसमायुक्तंधनधान्यसमाकुलम् ॥ द्वारे
तिष्ठंतिसैन्याश्चगजारथमनेकधा ॥ ५६ ॥ धनवांश्चमहाभोगंचक्रवर्तीमहान्नृपः
॥ बांधवैःसहभृत्यैश्चभुंजंतेविपुलांश्रियम् ॥ ५७ ॥ दीर्घायुर्विपुलाभोगाःपुनस्ते
स्वर्गगामिनः ॥ अतीतस्यनरेंद्राणांआज्ञामानसमेवच ॥ ५८ ॥ सर्वपुण्यंमहारा
जापूर्णचन्द्रकलामुखम् ॥ कैलासस्यसमोपेतांआनन्दंकोटिमेवच ॥ ५९ ॥ सुव
र्णगोपुरद्वारैर्हेमप्राकारवेष्टितम् ॥ प्रासादग्रहसंकीर्णंसूर्यकोटिसमप्रभम् ॥ ६० ॥
मणिरत्नसमाकीर्णंसप्तप्राकारवेष्टितम् ॥ इन्द्रनीलैर्महानीलैः पद्मरागोपशोभित

म् ॥ ६१ ॥ सर्वरत्नसमाकीर्णंचातिरम्यंमनोहरम् ॥ तत्रस्थानेमहासेनदेवानांच
महाबलम् ॥ ६२ ॥ ध्वजमालाकुलंदिव्यंदृश्यतेशिखरोत्तमम् ॥ निवासोदेवताः
सर्वेत्रयस्त्रिंशच्चकोटयः ॥ ६३ ॥ तस्मिंस्थानेमहासेनशोभतेपुरमुत्तमम् ॥ निवा
सोदेवदेवस्यसुरैः सहितशंकरः ॥ ६४ ॥ अतिरम्यंगृहस्थानंमहादिव्यंमनोहर
म् ॥ निशिवह्निस्तथातेजोदृश्यतेचदिशोदश ॥ ६५ ॥ दीव्यंतेदिव्यमानेचसर्व
ज्योतिर्दिवाकरः ॥ तप्तकांचनवर्णाभाअग्नितेजसमप्रभाः ॥ ६६ ॥ भेरीमृदंग
शब्देनशंखतूर्याश्चवेणुकाः ॥ दुंदुभिस्तालनिर्घोषैर्गीतवादित्रनादितम् ॥ ६७ ॥
गीतंगायंतिगन्धर्वाः वेणुंवाद्यन्तिसुन्दरी ॥ नृत्यंतिचाप्सरास्तत्ररंभाद्यास्त्रीरनेक
धा ॥६८॥ नित्यंसहस्राण्याकीर्णादृश्यंतेह्यर्चिताः सदाः ॥ पुरीमध्येतथासर्वेक्षीरं

सर्पिस्तथामधु ॥ ६९ ॥ मधुकानांयथाम्लेवभुंजतिवरमूर्त्तिमान् ॥ दृश्यतेकांच
नंवृक्षंकूष्मांडसदृशोपमम् ॥ ७० ॥ चूतचन्दनसंयुक्तंकदलीखंडमंडितम् ॥ ए
करूपंमहारम्यंमर्वदेवनिवासितम् ॥ ७१ ॥ एकविंशतिलक्षंचदृश्यतेधवलंगृह
म् ॥ तत्रहेममहादिव्यंवहुरत्नसुशोभितम् ॥ ७२ ॥ पंचादिसाधकाः सर्वेगंतव्य
मुत्तरांदिशम् ॥ ७३ ॥ ( इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादे त्रिपथस्वर्गव
र्णनोनामसप्ताविंशतिः पटलः ॥ २८ ॥ ) श्रीईश्वरउवाच ॥ नदीवहतितत्रैव
क्षीरशर्करसर्पिषः ॥ देवगन्धर्वसंकीर्णदेवकन्यासमाकुलम् ॥ १ ॥ चन्द्रादित्यस
मंतेजोदृश्यतेगृहमुत्तमम् ॥ इन्द्रनीलैर्महानीलैर्विस्फुरंतिकरंतथा ॥ २ ॥ तस्य
मध्येमहारम्याहेमवद्धावसुधंरा ॥ साधकाश्चगतास्तत्रयत्रदेवोमहेश्वरः ॥ ३ ॥

श्रीदेव्युवाच ॥ क्वभुवनागताः सिद्धाः क्वस्थानेचैवगम्यते ॥ साधकउवाच ॥
आगतामृत्युलोकाच्चगंतव्यंशंकरालयम् ॥ ४ ॥ श्रीदेव्युवाच ॥ अस्मिन्स्था
नेमहावीराभुंजंतिविपुलांश्रियम् ॥ विमानंकामिनीदिव्यंपश्यंतिसर्वसाधकाः ॥
॥ ५ ॥ आरुह्यतिचविप्रेन्द्रःपथानेनैवगम्यते ॥ दिव्यवस्त्रपरीधानंदिव्यगन्धानु
लेपनम् ॥ ६ ॥ दिव्यपुष्पंशिरोवध्वादिव्यरत्नविभूषितम् ॥ भुंजंतुसाधकाः स
र्वेयावच्चंद्रार्कतारकाः ॥ ७ ॥ सुवर्णकेतकीजातिस्तिष्ठंतिराजचंपिकाः ॥ बकुलैः
शतपत्रैश्चविल्ववृक्षस्यपाटलैः ॥ ८ ॥ दृश्यंतेचसदापुष्पंतिष्ठंतिसर्वगन्धकाः ॥
एवंपुरीमहारम्यामहाज्ज्योतिर्मनोहरम् ॥ ९ ॥ गीतंनृत्यंचभोगंचवहुगन्धादिवा
सितम् ॥ यौवनस्थामदोन्मत्तामहारूपामहाबलाः ॥ १० ॥ ओष्ठमेकंचभूम्यां

चद्वितीयंगगनेतथा ॥ जिह्वास्फुरंतिचंद्राश्चसाधकाविस्मयंगताः ॥ ११ ॥ आ
चार्यःस्वागतमृप्टच्छेत्स्मरेद्घोरंमहत्कृतम् ॥ ओंहुंफट्स्वाहा ॥ अष्टोत्तरशतंचै
वसघोरंजप्यतेमहत् ॥ १२ ॥ अघोरंजप्यमानस्तुअदृष्टायांतितत्क्षणात् ॥ तुष्ट
स्तुष्टोसितेसर्वेप्रणमंतिजगद्गुरुम् ॥ १३ ॥ सत्यंचवदतेयावत्तावच्चंडेश्वरः
पुनः ॥ रत्नमालाकरोदिव्याकर्णेचहेमकुंडलम् ॥ १४ ॥ त्रिनेत्रंदशभुजाश्चशू
लहस्तधरास्तथा ॥ दिव्यवस्त्रपरीधानंदिव्यभोगसमाकुलम् ॥१५॥ दिव्यदेहम
हाकायादिव्याभरणभूषिताः॥दिव्यपुष्पंशिरोवद्ध्वादिव्यगन्धानुलेपनम् ॥१६॥
इतिश्रीकेदारकल्पेईश्वरकार्तिकसंवादेदेवीवर्णनोनामअष्टाविंशतिःपटलः ॥२८॥
चंडिकेश्वरउवाच ॥ साधुसाधुमहाप्राज्ञकृतंकर्मसुदुष्कृतम् ॥ एवमुक्तस्तथाचंडी

81

यत्रेदेवोमहेश्वरम् ॥ १ ॥ कृतांजलिपुटोभूत्वापृच्छंतिपरमेश्वरम् ॥ चंडिकेश्वर
उवाच ॥ साधकाः मृत्युलोकाच्चआगतादेवदर्शनम् ॥ २ ॥ श्रीईश्वरउवाच ॥
शृणुचंडीमहाप्राज्ञएकचित्तोऽव्यवस्थिता ॥ मृत्युलोकेमहातीर्थंकेदारोनामदेवता
॥ ३ ॥ तत्रसंललितागंगाअर्चयित्वातुशंकरम् ॥ तत्रकालस्यचंडीचसाधकाः हृ
दिसंस्थिताः ॥ ४ ॥ आगच्छंतिततनोचंडीविकल्पंनैवकारयेत् ॥ हृष्टतुष्टोमहाचं
डीयत्रतिष्ठंतिसाधकाः ॥ ५ ॥ चंडिकेश्वरउवाच ॥ युष्मन्तुष्टोमहादेवोउमा
सार्द्धंत्रिलोचनः ॥ उत्तिष्ठगम्यतेसिद्धोयत्रदेवोमहेश्वरः ॥ ६ ॥ नंदीस्कंदौमहा
कायावागतौरथकामिनौ ॥ त्रिनेत्रंदशभुजाश्चकपालंशूलहस्तकम् ॥ ७ ॥ तदा
सिद्धाः समारूढाः स्कंदस्तत्रसमागतः ॥ सुगंधाश्चमहातेजाः प्रयच्छंतिततो

हिमाम् ॥ ८ ॥ प्रणम्यदेवदेवञ्चआरूढंतिरथोत्तमम् ॥ आरूढंचततः स्थानेस
र्वकामैकमुत्तमम् ॥ ९ ॥ किमिदंदृश्यतेचाग्रेशिखरंचैवशोभितम् ॥ येषांस्थानंच
नामानिसुस्थानंशोभनानिच ॥ १० ॥ तत्रस्थानेचनामानितत्सर्वंकथयामिते ॥
चंडिकेश्वरउवाच ॥ अमरावतीपुरीरम्यापूर्वभागेसमन्विता ॥ ११ ॥ आग्नेय्यां
दिग्विभागेचपुरीतेजोवतीशुभा ॥ नैर्ऋत्यांदिग्विभागेचयत्रपुरीसुशोभिता ॥
॥ १२ ॥ पश्चिमेदिशिभागेचपुरींतिष्ठतिशोभना ॥ वायव्यांदिशिभागेचपुरीव
रुणमेवच ॥ १३ ॥ सुमेरोश्चोत्तरदिशोभागेपुरीमहोदरी ॥ मध्येलिंगंकृतंदिव्यं
शंखकुंदेंदुसन्निभम् ॥ १४ ॥ द्वादशकोटिविस्तीर्णंउच्छ्रायश्चचतुर्गुणम् ॥ कैला
सशिखरेरम्यंनानारत्नोपशोभितम् ॥ १५ ॥ संप्राप्ताः साधकास्तत्रपश्यंतिच

शिवालयम् ॥ विमानंकामिकंदिव्यंमंडितंरथमंडलैः ॥ १६ ॥ सर्ववाद्यरसोपेतंदुं
दुभिः पटहान्वितम् ॥ शंखकोलाहलंपूर्णवाद्यमंडलसंयुतम् ॥ १७ ॥ वेणुताल
महाशब्दंपटहंविनिनादितम् ॥ महासूर्यरविस्तेजागीतनृत्यसमन्वितम् ॥ १८ ॥
वाद्यानिविविधानिचनानामधुरनिः स्वरम् ॥ श्रुत्वाचसाधकाः सर्वेहर्षिताश्चाशि
वालयम् ॥ १९ ॥ शतयोजनविस्तीर्णंशोभितंशिवमंडपम् ॥ देवगंधर्वसंकीर्णमु
च्छ्रायश्चचतुर्गुणम् ॥ २० ॥ गृहानिदिव्यशोभानिदृश्यंतेबह्वनेकधा ॥ हेमरत्न
समायुक्तंहेमप्राकारवेष्टितम् ॥ २१ ॥ प्राकारंतत्रसौवर्णमग्निज्वालासमप्रभाः॥
मौक्तिकंचंद्रकांतिश्चप्रस्फुरंतिह्यनेकधाः ॥ २२ ॥ मेरुशृंगेसमारूढाः नानारत्न
विभूषिताः ॥ प्राकारंहेमरत्नानिवेष्टितंचशिवालये ॥ २३ ॥ हेमरत्नसमायुक्तं

दिव्यज्योतिर्मनोहरम् ॥ षोडशकलासमायुक्तंतोरणैरुपशोभितम् ॥ २४ ॥ माणि
रत्नसमायुक्तंवेष्टितंशिवमंडपम् ॥ लक्षयोजनविस्तीर्णंहरस्थानंचमंडपम् ॥
॥ २५ ॥ स्तंभाहेममयाः सर्वेचंद्रकांतिसमत्रभाः ॥ हेमेनरचिताभूमिर्नानारत्न
विभूषितम् ॥ २६ ॥ क्षणंक्षणंचतिष्ठंतिसूर्यकोटिसमप्रभाः ॥ तस्यमध्येमहाइं
शंसभूयुंपरिवेष्टितम् ॥ २७ ॥ सिंहासनानिदिव्यानिहेमरत्नविभूषितम् ॥ भूषि
तंकनकैः कांतैः पद्मरागैस्ततः परम् ॥ २८ ॥ तत्रतिष्ठतिदेवेशोजगन्नाथो
महेश्वरः ॥ चामरंदिव्यमानंचधनदोवरुणस्तथा ॥ २९ ॥ नंदीचंडीप्रतिहारा
स्तिष्ठंतिद्वारसंयुतम् ॥ सोमेनधारितंछत्रंरुद्रस्योपरिभक्तितः ॥३०॥ पवनोवा
द्यतेर्वीणामहानादेननादितम् ॥ देवानांचसुरश्रेष्ठंसर्वाभरणभूषितम् ॥ ३१ ॥

भाग्यं

दिव्यवस्त्रपरीधानंचन्दनादिविलेपनम् ॥ नीलकंठंमहातेजस्सूर्यकोटिसमप्रभम्॥
॥ ३२ ॥ त्रिनेत्रंदशभुजाश्चचंद्रार्द्धकृतशेखरम् ॥ देवदेवंवृषारूढंशूलहस्तधरं
प्रभुम् ॥ ३३ ॥ सर्वभोगसमायुक्तंभस्मगात्रविलेपनम् ॥ कपालखट्वांगधरंपंच
वक्त्रंमहेश्वरम् ॥ ३४ ॥ पिनाकशूलपाणिंचदेवदेवंजगद्गुरुम् ॥ गणगन्धर्वसं
कीर्णंनानाभरणभूषितम् ॥ ३५ ॥ लोकनाथंजगन्नाथंसर्वव्यापिमहेश्वरम् ॥
देवगणसमाकीर्णंनानारत्नविभूषितम् ॥ ३६ ॥ त्रिलोचनंजगन्नाथंसर्वव्या
पिमहेश्वरम् ॥ देवकन्यासमाकीर्णंरुद्रकन्यासमाकुलम् ॥ ३७ ॥ तिष्ठन्ति
मुनयः सर्वैतिष्ठन्तिदेवयोषिताः ॥ जिह्वाग्रेचचतुर्वेदीहृदयेभुवनत्रयम् ॥
॥ ३८ ॥ रोमाग्रेमुनयोदेवाः सिद्धाश्चयक्षराक्षसाः ॥ सप्तपातालपादौ

चआकाशेमस्तलोचनम् ॥ ३९ ॥ शृणुस्कन्दमहासेनवह्निंचस्वर्कमेवच ॥
तिष्ठन्तिचसुराः सर्वेब्रह्माद्यादेवतागणाः ॥ ४० ॥ लोकनाथंजगन्नाथं
सर्वव्यापिमहेश्वरम् ॥ देवगणैः समाकीर्णनानारत्नविभूषितम् ॥ ४१ ॥
ब्रह्माविष्णुश्चइंद्रश्चसभायांपरिवेष्टितः ॥ प्रोक्षणीयंप्रकुर्वंतिवाद्यंतेवहनेकधा ॥
॥ ४२ ॥ शंखदुंदुभिनिर्घोषैःकाहलैर्भेरीमर्दलैः ॥ पटहैर्वेणुवाद्यानिवादित्रैःसर्व
नादिताः ॥ ४३ ॥ डमरुभिर्निःश्वसनंगणमाकारगर्जितम् ॥ नृत्यंतीचसुरारंभा
अप्सराकन्यकास्तथा ॥ ४४ ॥ सर्वालंकारसंयुक्तंसर्वाभरणभूषितं ॥ विंवतेजः
समुद्भूतंहेमरत्नविभूषितम् ॥ ४५ ॥ संपूर्णचंद्रवदनांकुंडलाभरणोज्वलां ॥ शि
रःपुष्पंसुगंधंचनागवल्लीविभूषितम् ॥ ४६ ॥ रूपयौवनसंयुक्तंकोकिलास्वरभा

षितम् ॥ नृत्यंतिशंकरस्याग्रेवाद्यंतिवह्वनेकधा ॥४७॥ पठंतिविविधंशास्त्रंस्तुतिं
कुर्वंतिदेवताः ॥ गीतनादविनोदेनशृण्वंतिसुरानेकधा ॥ ४८ ॥ नानाशास्त्रविनो
दानिपुष्पमालासुवेष्टितम् ॥ चंदनागरुकर्पूरैर्वासिताचमहापुरी ॥ ४९ ॥ स्व
स्तिकैरत्नपूरैश्चद्वारेचगणभूमिकम् ॥ दर्पणंवामहस्तेनभोजनंबहुभावितम् ॥५०॥
पारिजातकनागैश्चनानापुष्पैश्चशोभिताः ॥ मंदारकल्पवृक्षैश्चपुष्पैर्दाडिमसंयुतैः
॥ ५१ ॥ केतकीशतपत्रैश्चाविल्ववृक्षैश्चपाटलैः ॥ एवंपुष्पसमाकीर्णदेवदारुफ
लैस्तथा ॥ ५२ ॥ पुन्नागवृक्षसफलैर्विद्यंतेराजचंपिकाः ॥ चूतचंदनसंयुक्तंकद
लीखंडमंडितम् ॥५३॥ वासितंचपुरेसर्वेमहागंधानुवासितम् ॥ तत्रप्राप्ताश्चये
सिद्धाः पश्यंतिचशिवालयम् ॥ ५४ ॥ दृश्यन्तेगणगन्धर्वादृश्यन्तेसुरानेकधाः॥

सर्वेदशभुजाश्चैवचन्द्रार्द्धकृतशेखराः ॥ ५५ ॥ ब्रह्माविष्णुस्तथाइन्द्रोनक्षत्रग्र
हतारकाः ॥ नन्दीस्कन्दोमहाकायोभृंगीकूष्मांडमेवच ॥ ५६ ॥ सिद्धविद्याधरा
श्चैवऋषिकन्यानरास्तथा ॥ गोकर्णहस्तिकर्णंचशूलपाणिमहेश्वरम् ॥ ५७ ॥
वृषभोवासुकिश्चैवयेयत्रत्रिदशास्तथा ॥ तांदृष्ट्वाचमहाप्राज्ञाः साधकाः विस्म
यंगताः ॥ ५८ ॥ साधकउवाच ॥ पृच्छंतिसाधकाः सर्वेकुत्रदेवोमहेश्वरः ॥ चं
डिकेश्वरउवाच ॥ ब्रह्माचदक्षिणेपार्श्वेवामेविष्णुः समाश्रितः ॥ ५९ ॥ मध्येना
रीधरोदेवः सर्वालंकारभूषितः ॥ भस्मांगोद्धूलितंगात्रंअर्द्धकुंकुमचर्चितम् ॥
॥ ६० ॥ एवंदेवउमासार्द्धत्रिदशेश्वरपूजितः ॥ एवंपश्यन्तितेसिद्धादेवदेवंमहे
श्वरम् ॥ ६१ ॥ दंडवत्प्रणताःसर्वेपातिताधरणीतले ॥ कृतांजलिपुटोभूत्वासाध

काःप्रणमंतिच ॥ ६२ ॥ साधकउवाच॥ अद्यमेसफलंजन्मअद्यमेसफलंतपः ॥
अद्यमेसफलंजाप्यमद्यमेसफलाक्रिया ॥ ६३ ॥ अद्यमेसफलंराज्यमद्यमेसफलंध
नम् ॥ अद्यमेसफलंकर्ममयादृष्ट्वासदाशिवम् ॥६४॥ नमस्यंचरणंपूज्यंदृष्ट्वा
संभाषितंशिवम् ॥ अद्यमेसफलंकृत्यंदृष्ट्वादेवंमहेश्वरम् ॥ ६५ ॥ वरंदेहिमहा
देवपिनाकिन्वृषभध्वज ॥ साधकानांहितार्थायउमांवचनमब्रवीत् ॥ ६६ ॥ व
रंदास्याम्यहंदेविसाधकाययथोत्तमम् ॥ एवमुक्तोमहादेवस्तत्राज्ञासंप्रदीयते ॥
॥ ६७ ॥ नंदीश्वरोमहाकायः स्वयंवागणनायकः ॥ जयाचविजयाचैवनर्मदाच
सरस्वती ॥ ६८ ॥ गंगाचयमुनाचैवकावेरीचमहानदी ॥ समुद्रेणसमन्विताःस
र्वानद्योविभूषिताः ॥ ६९ ॥ स्नात्वापीतस्तथानद्यांहेमकुंभैश्चरत्नकैः ॥ स्नानं

चचोत्तमैःकुंभैःपठंतिसिद्धचारणैः ॥ ७० ॥ जयशब्देनदेवस्यशंखतु शचवेणु
काः ॥ दिव्यांगवरसंयुक्तादिव्याभरणभूषिता ॥७१॥ दिव्याचाररताश्चैवनाना
रत्नविभूषिताः ॥ रत्नमालांशिरोवद्ध्वाललाटेहेमपुष्पजम् ॥७२॥ प्रकाशप्रति
मारूपासत्कायाकामरूपिणी ॥ देवीस्मरणमात्रेणदृश्यंतेमृत्युमुत्तमम् ॥७३॥ पद्मं
चदृश्यतेरूपंसाक्षात्त्रैलोक्यकाक्षमम्॥देव्यासुवर्णपात्रेणदीयतेवरमुत्तमम् ॥७४॥
पिबंतिह्यमृतंसिद्धायेचगर्भनिवारिताः॥उमयासहितोरुद्रःप्रेषितंपुरमुत्तमम् ॥७५॥
इतिश्रीकेदारकल्पे ईश्वरकार्तिकसंवादे ईश्वरदर्शनममृतप्रापणोनामएकोनत्रिंश
त् पटलः ॥२९॥ श्रीईश्वरउवाच ॥ ओंसाधकाश्चगतास्तत्रयत्रइंद्रमहापुरीम्॥
द्वादशलक्षविस्तीर्णयोजनानांपुरंमहत् ॥ १ ॥ द्वादशादित्यतेजाढ्यंहेमप्राकारवे

ष्ठितम् ॥ मणिरत्नसमाकीर्णंप्राकारंगृहमाकुलम् ॥ २ ॥ शतयोजनविस्तीर्णंमं
दिरंतस्यमंडपम् ॥ प्रतोल्याद्वारसंयुक्तंचित्रकर्मोपशोभितम् ॥ ३ ॥ सिंहासनंसु
दिव्यंचहेमरत्नविभूषिम् ॥ तत्रतिष्ठन्महासेनइंद्रराजोमहानृपः ॥ ४ ॥ दिव्य
वस्त्रपरीधानंदिव्यगंधानुलेपनम् ॥ दिव्यपुष्पांशिरोवध्वादिव्यरत्नविभूषितम् ॥५॥
संपूर्णचंद्रवदनांरूपयौवनगर्विताम् ॥ इन्द्रश्चपीतवर्णश्चकरेवज्रंचगृह्यते ॥ ६ ॥
साधकाश्चततोदृष्ट्वाशोभितैस्तुमहापुरी ॥ साधकाश्चततोदृष्ट्वागतास्तेतत्र
सम्मुखम् ॥ ७ ॥ इंद्रउवाच ॥ विमानारूढदेवाश्चदिव्यकन्यासमाकुलाः ॥ चा
मरैर्वीज्यमानंचस्वस्तिंकुर्वंतिदेवताः ॥ ८ ॥ प्रेक्षणीयंप्रकुर्वंतिछत्रंचोपरिधार्यते ॥
तोरणैःशोभितास्तत्रवैडूर्यमणिमौक्तिकैः ॥ ९ ॥ आगताश्चतथाकन्याःसर्वलक्ष

णसंयुताः ॥ दिव्यवस्त्रपरीधानेदिव्यरूपश्चतेजसा ॥ १० ॥ दिव्यपुष्पंशिरोव
ध्वादिव्यगंधानुलेपनः ॥ करकंकणसंयुक्ताहारनूपुरभूषिता ॥ ११ ॥ इंद्रनीलैर्म
हानीलैः पद्मरागोपशोभिताः ॥ संपूर्णचंद्रवदनाःसर्वाभरणभूषिताः ॥ १२ ॥क
न्यकाआगतास्तत्रह्यर्चयंतिचसाधकाः ॥ गीतंकुर्वंतिकन्यास्तावाद्यंतेबह्वनेकधाः
॥ १३ ॥ शंखदुंदुभिनिर्घोषैःकाहलैर्भेरिमर्दलैः ॥ साधकाइंद्रसहिताजल्पंतिचप
रस्परम् ॥ १४ ॥ इन्द्रउवाच ॥ अस्मिन्स्थानेपुरीरम्येभुंक्ष्वभोगयथासुखम् ॥
भुंजंतिसाधकावीरायावच्चन्द्रार्कतारकाः ॥ १५ ॥ अत्रस्थानेमहाभोगानानार
त्नसमाकुलम् ॥ तिष्ठन्तिसाधकाः सर्वेनानाभोगपरिच्छदाः ॥ १६ ॥ यावत्पु
रीस्थिताः सिद्धास्तावत्तिष्ठन्तिसाधकाः ॥ इन्द्रस्यवचनंश्रुत्वासाधकोवाक्यमब्र

वीत् ॥१७॥ साधकउवाच ॥ विनारुद्रंमहाराजनन्नरोचन्तिपुरीतव ॥ पश्चान्तु
साधकाः सर्वेंगताविष्णुपुरींमहत् ॥१८॥ ( इतिश्रीकेदारकल्पे ईश्वरकार्तिकसं
वादे इन्द्रपुरीवर्णनोनामत्रिंशत् पटलः ॥ ३० ॥ ) श्रीईश्वरउवाच ॥ ओंअग्र
तोदृश्यतेतत्रमहागिरिवरोत्तमम् ॥ योजनंदशलक्षंचसूर्य्यकोटिसमप्रभम् ॥ १ ॥
नानारत्नंमहासेनपुरीरम्यंमनोहरम् ॥ सिंहासनंदिव्यकान्तिहेमरत्नविभूषितम् ॥
॥ २ ॥ हैमेनरचिताभूमिः प्रासादंगृहमाकुलम् ॥ ध्वजमालाकुलंदिव्यंहेमप्राका
रविष्टितम् ॥ ३ ॥ जातश्चपद्मरागश्चवेष्टितंविष्णुशासनम् ॥ दिव्यवस्त्रप
रीधानंदिव्याभरणभूषितम् ॥ ४ ॥ तत्रतिष्ठन्तिदेवास्तेवैकुण्ठेचजनार्दनः ॥ शं
खदुंदुभिनिर्घोषैः काहलेर्भेरिमर्दलैः ॥ ५ ॥ नृत्यंतिचाप्सरास्तत्रादिव्यगन्धानुले

पनः ॥ साधकाश्चगतास्तत्रदृष्ट्वादेवंजनार्द्दनम् ॥ ६ ॥ श्रीजनार्द्दनउवाच ॥
अस्मिन्नेवपुरेरम्येबहुकन्यासमाकुलम् ॥ विमानारूढमाचार्याभुंजंतिविपुलांश्रिय
म् ॥ ७ ॥ भुंजंतिसाधकाः सर्वेतिष्ठन्तिगरुडासनम् ॥ तावत्त्वंभोगसंयुक्तंयाव
दिंद्राश्चतुर्दश ॥८॥ आचार्यउवाच ॥ देवदेवमहाविष्णोशृणुत्वंवचनंमम ॥ आ
गत्यचमयादृष्ट्वादुर्ल्लभंतवदर्शनम् ॥९॥ अद्यमेसफलंजन्मचाद्यमेसफलंतपः ॥
अद्यमेसफलंजाप्यंअद्यमेसफलाक्रिया ॥ १० ॥ अद्यमेसफलंभाग्यंमुक्तोहंभववं
धनात् ॥ अद्यदृष्ट्वाचगोविन्दंसर्वपापैः प्रमुच्यते ॥ ११ ॥ श्रीकृष्णउवाच ॥
सिंहासनंसुदिव्यंचहेमरत्नविभूषितम् ॥ तत्राऽतिष्ठन्महासिद्धामहावीरामहात
पाः ॥ १२ ॥ दिव्यवस्त्रपरीधानंदिव्यभोगसमाकुलम् ॥ दिव्यपुष्पंशिरोवध्वा

 चंदनानुविलेपिनः ॥ १३ ॥ तत्रतिष्ठन्तिआचार्यंभुंजंतिविपुलांश्रियम् ॥ आ 
चार्यउवाच ॥ अस्मिन्स्थानेनमेकार्यंसत्यंसत्यंवदाम्यहम् ॥ १४ ॥ इतिश्री के ३१
 दारकल्पे ईश्वरकार्तिकसंवादे विष्णुपुरीवर्णनोनाम एकत्रिंशत् पटलः ॥ ३१ ॥
ईश्वरउवाच ॥ सप्तलक्षंचविस्तीर्णंयोजनंचपुरीमहत् ॥ रम्यंमनोहरंदिव्यंउदि ३२
तार्कसमप्रभम् ॥॥१॥अग्निज्वालासमोपेतंहेमप्राकारवेष्टितम्॥द्वादशादित्यतेजा
ढ्यंअग्निकोटिसमप्रभम्॥२॥नानारत्नसमाकीर्णंवैडूर्यमणिभूषितम्॥ आम्रचन्दन
संयुक्तंकदलीखंडमंडितम् ॥ ३ ॥ बकुलैः शतपत्रैश्चविल्वपत्रैश्चपाटलैः ॥ रा
जवृक्षसमाकीर्णंकेतकीराजचंपिका ॥ ४ ॥ ध्वजमालाकुलंदिव्यंप्रासादंपरिशो
भितम् ॥ देवगन्धर्वसंकीर्णंदेवकन्यासमाकुलम् ॥ ५ ॥ पठन्तिविविधंशास्त्रंनि 

घोषंवेदब्राह्मणाः ॥ स्वराणिचमहानादंदृश्यतेचदिशोदश ॥ ६ ॥ सिंहासनंसु
दिव्यंचहेमरत्नविभूषितम् ॥ हेमपुष्पसमायुक्तंमणिवैडूर्यमौक्तिकम् ॥ ७ ॥ तत्र
तिष्ठतिदेवोऽसौब्रह्मादेवजगत्पतिः ॥ आगताः साधकादृष्ट्वावदंतिस्वागतंत
था ॥ ८ ॥ ब्रह्मोवाच ॥ भोभोः साधोमहाशांतअस्मिन्पुरेसदावस ॥ इदंपंच
महासेनयावदिंद्राश्चतुर्दश ॥ ९ ॥ तावत्त्वंभूः पुरीरम्याभुंजभोगयथासुखम् ॥
अस्मिन्स्थानेमहारम्यंसर्वभोगसमाकुलम् ॥ १० ॥ त्रिसंध्यंचभवेन्नित्यंकुर्वं
तिस्वकरस्फुटम् ॥ साधकउवाच ॥ विनारुद्रंमहाबाहोनरोचन्तेतिब्राह्मणाः ॥
॥ ११ ॥ पश्चात्तुसाधकाः सर्वेगताधर्मपुरीमहत् ॥ ( इतिश्री केदारकल्पे ईश्व
रकार्तिकसंवादेब्रह्मपुरीवर्णनोनाम द्वात्रिंशत् पटलः ॥ ३२ ॥ ) श्रीईश्वरउवा

89

च ॥ ओंकैलासदक्षिणेभागेऽतिष्ठद्धर्मपुरीतथा ॥ द्वादशलक्षविस्तीर्णंयोजनानां
पुरंमहत् ॥ १ ॥ रम्यंमनोहरंदिव्यंलोहप्राकारवेष्टितम् ॥ हेमरत्नसमाकीर्णैसर्वे
षांचभयंकरम् ॥ २ ॥ सिंहासनंसुदिव्यंचहेमरत्नविभूषितम् ॥ तत्रातिष्ठतिदे
वोऽसौधर्मराजोमहानृपः ॥ ३ ॥ तिष्ठन्तिकिंकराः सर्वेतिष्ठंतिराजचंपिकाः ॥
सर्वेगुणसमोपेतास्तिष्ठंतिचित्रगुप्तकाः ॥ ४ ॥ पापंपुण्यंचलोकानांलिखितंत
त्रलेखकः ॥ सुकृतंदुःकृतंकेचित्भुंजंतिसुखदुःखयोः ॥ ५ ॥ राजागुणंचभोक्तव्यं
लिखितंतत्रपुस्तके ॥ सुकृतंदुष्कृतंकेचित्भुंजंतिसुखदुःखकान् ॥ ६ ॥ महानर
कंचभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ ऊर्ध्वपादस्थिताः केचित्तप्ततैलेपुनः पुनः ॥
॥ ७ ॥ केचित्तुरौरवेघोरेकुंभीपाकेतथैवच ॥ केचित्तुक्रमिस्थानेचकेचिद्मुद्गर

चूर्णिताः ॥८॥ हस्तिकर्णेस्थिताः केचित्तप्तभारेषुलोहिताः ॥ कुम्भीपाकेस्थि
ताःकेचित्तप्तांगारेनिभर्जिताः॥९॥ आरण्येचस्थिताःकेचित्केचित्स्थितामहार्ण
वे ॥ केचिद्बद्धाश्चवैपाशैः केचिद्गृह्यंतिचांकुशैः ॥ १० ॥ केचिल्लोहस्यपाशे
नतप्तशक्तिप्रछेदिताः ॥ संस्थितंचकृतंकामंक्रियन्तेपापकार्मिणः ॥ ११ ॥ स
प्तजन्मकृतंपापंक्रियतेपापकर्मणा ॥ सप्तजन्मकृतंपापंभुजंतेचपृथक्पृथक् ॥
॥ १२ ॥ पुण्यधर्मैकृतंपापंभुजन्तेसुकृतंकृतम् ॥ अस्मिन्स्थानेमहाघोरेसर्वेतेच
प्रपीडिताः ॥ १३ ॥ येपूर्वेनिंदतेशास्त्रंइन्द्रसेनमयाकृतम् ॥ सर्वेयेभोजनंकृत्वाय
त्रधर्मपुरीसदा ॥ १४ ॥ साधकाश्चगतास्तत्रयत्रधर्मपुरीमहत् ॥ धर्मउवाच ॥
साधुसाधुमहाप्राज्ञाः तुष्टोहंतवसाधकाः ॥ १५ ॥ साधकउवाच ॥ यदितुष्टो

90

सिमेधर्मंशृणुत्वंवचनंमम ॥ अस्मिन्स्थानेचयेजीवामहानरकपीडिताः ॥ १६ ॥
मुंचवर्षशतंदिव्यंमोक्षंचकुरुधर्मयोः ॥ धर्मक्षयंतथाकृत्वागताः सर्वेचजन्तवः ॥
॥ १७ ॥ आचार्यस्यपुरेसर्वेआगताः सर्वसाधकाः ॥ पंचादीचपुरीसर्वेनैवरुच्यं
तिसाधकाः ॥ १८ ॥ पंचैतेसाधकाः सेनआगताः शिवशासने ॥ १९ ॥ ( इति
श्रीकेदारकल्पेईश्वरकार्तिकसंवादे धर्मपुरीवर्णनोनाम त्रयत्रिंशत् पटलः ॥३३॥)
श्रीईश्वरउवाच ॥ ओंउमयासहितंरुद्रंवरंदत्वाचसाधकाः ॥ सप्तकोटेस्तथाकन्या
एकैकंचप्रदीयते ॥ १ ॥ गौरीचसदृशीमूर्त्तिःसर्वालंकारभूषिता ॥ सर्वभोगसमो
पेतातिष्ठंतिसाधकैःसह ॥ २ ॥ इच्छाभोगंभवेत्सर्वेऽश्नीयुःस्वच्छंदगामिनः ॥
क्रीडंतिचमहाभोगायत्रदेवोमहेश्वरः ॥ ३ ॥ शृणुस्कंदमहाप्राज्ञसाधकोविधिम

ब्रवीत् ॥ युगेयुगेंचयेसिद्धागच्छंतिचमहापथे ॥ ४ ॥ सप्तलक्षंतथासिद्धाःसत्यं
सत्यंवदाम्यहम् ॥ त्रेतायांपंचलक्षंचगच्छंतिचमहापथे ॥ ५ ॥ द्वापरेचत्रयोल
क्षाएकलक्षंकलौयुगे ॥ एवंसिद्धामहासेनएकाचित्तांशिवालये ॥ ६ ॥ चतुर्युगेसाध
कानांसत्यंसत्यंवदाम्यहम् ॥ श्रुत्वाकल्पकृतंध्यानंविनाकल्पेनसिध्यति ॥ ७ ॥
नानासिद्धिप्रदंस्थानंशिवंसिद्धैश्चहेतवः ॥ पश्चात्तुसाधकाः सर्वेएकविंशतिमेव
च ॥ ८ ॥ एतन्मध्येमहासिद्धाभावंतत्रैवसिध्यति ॥ महादेवमहासेनमहाकल्पंम
हापथे ॥ ९ ॥ महासिद्धमहाभोगादुर्ल्लभंभुवनत्रयम् ॥ महापंथेमहापुण्यंसत्यंस
त्यंषडानन ॥ १० ॥ भावेनपठतेनित्यंगंगास्नानंफलंलभेत् ॥ शिवनिंदांचयेमू
ढाः येचशास्त्रंशिवात्मकम् ॥ ११ ॥ निंदंतेचगुरुंचैवतेषांसिद्धिश्चदुर्ल्लभा ॥

91

गृहेयस्यसदातिष्ठेत्तुशिवकल्पंमहापथे ॥ १२ ॥ ब्रह्महत्यादिकंपापंतस्यचैवव्य
पोहति ॥ यद्गोप्यंगणगंधर्वायच्छास्त्रंकथितंमया ॥ १३ ॥ अंतकालेमनुष्याये
महाकल्पंशृण्वंतिच ॥ तेषांरुद्रपदेवासःकल्पकोटिसहस्रकम् ॥ १४ ॥ अन्तेचमा
नुषालोकाः पठंतिशृण्वंतिच ॥ तेषांतुष्टोमहादेवः शिवलोकेवसंतिच ॥ १५ ॥
गयायांपिडदानेनकाशीदर्शनमुत्तमम् ॥ दिव्ययागेश्वरस्थानेकेदारेशंचदर्शनम्॥
॥ १६ ॥ दृष्ट्वाचबद्रिकास्थानेसर्वदाचशिवालयम् ॥ गवांकोटिसहस्राणांस्नानं
भागीरथीतटे ॥ १७ ॥ मज्जयंतुसहस्रैकंगवांदत्वासमाहिताः ॥ एवंप्राप्तेभवेद्
भक्तिर्मोक्षकालेतुमोक्षिणः ॥ १८ ॥ एवंप्राप्तंभवेत्पुण्यंकथांशृण्वंतियेनराः ॥ इ
च्छासिद्धिर्भवेत्तस्यसर्वपापैः प्रमुच्यते ॥ १९ ॥ ध्रुवश्चलभतेमेरुंसागरेचमहार्णं

वे ॥ यदैवंध्रुवंचलतेकल्पेनैवान्यथाभवेत् ॥ २० ॥ पश्चिमायांदिशिगत्वाउद
यतिरविः शशिः ॥ विपरीतंभवेत्सर्वंकल्पेनैवान्यथाभवेत् ॥ २१ ॥ अनेकधर्मंत
तः कृत्वाव्रतोपवासमेवच ॥ नभवंतिसमंतुल्यंकल्पंशृण्वंतियत्फलम् ॥ २२ ॥
अनेकदानंपुण्यंकृत्वाहोमयज्ञस्तथैवच ॥ नभवंतिसमंतुल्यंकल्पंशृण्वंतियत्फलम्॥
॥ २३ ॥ सर्वतीर्थैतपः कृत्वास्नात्वाचभुवनत्रयम् ॥ नभवंतिसमंतुल्यंकल्पंशृण्वं
तियत्फलम् ॥ २४ ॥ दानंयज्ञंतपस्तीर्थंकायक्लेशेशुचिः क्रिया ॥ नभवंतिसमं
तुल्यंकल्पंशृण्वंतियत्फलम् ॥ २५ ॥ दानयज्ञंतपस्तीर्थंकल्पंपठंतिनित्यशः ॥ ह
रतेकर्मंदुःखंचतंभक्त्यानात्रसंशयः ॥ २६ ॥ इदंकल्पंमहापुण्यंयेपठंतिशृण्वंति
च ॥ सर्वेपापविनिर्मुक्ताःशिवसायुज्यमाप्नुयात् ॥ २७ ॥ ( इतिश्रीकेदारकल्पे

92

ईश्वरकार्तिकसंवादे महापन्थस्वर्गसोपानशिवपुर कैलासविधि वर्णनोनाम च
तुस्त्रिंशत् पटलः ॥ ३४ ॥ ) श्रीगणेशायनमः ॥ अथोत्तरन्यासंचकुर्यात् ॥
९० ओंनमः अघोराय ॥ ओंश्रीअघोरमंत्रस्य ॥ अन्नादऋषिः ॥ अव्यक्तगायत्री ७५
छन्दः ॥ ब्रह्मविष्णुमहेश्वरदेवता ॥ ओंवीजं ॥ रुंशक्तिः ॥ क्षुंकीलकं ॥ मोक्षा
र्थेजपेविनियोगः ॥ ओंदिशांन्यासंमहाभागकथयामितवानघ ॥ ओंकारं
विन्यसेद्भद्रेऊर्द्ध्वतः पापनाशनम् ॥ १ ॥ ओंकारंपूर्वदिग्भागेक्षुंकारं
अग्निमेवच ॥ रुंकारंधर्मराजस्यक्षुंकारंनैर्ऋतिस्तथा ॥ २ ॥ रुंकारं
पश्चिमेचरुंकारंवायव्येतथा ॥ क्षुंकारंउत्तरेचैवरुंकारंईशानमेवच ॥ ३ ॥
ओंकारंऊर्ध्वंविन्यस्यईशानन्तुह्यधोन्यसेत् ॥ दिशांन्यासंकृतंदेविहलन्यासंविच ९०

क्षणः ॥ ४ ॥ सर्ववर्णान्यसेत्प्राज्ञाःसावधानेनचेतसा ॥ अंगन्यासंयथाकुर्यात्तथा
त्वंशृणुवल्लभे ॥ ५ ॥ शिखायांविन्यसेत्ओंकारंरुंकारंमूर्ध्नितथा ॥ रुंकारंगुह्यदे
शेतुक्षुंकारंतुललाटके॥ ६ ॥ओंकारवक्त्रमेवंचरुंकारंनासिकेतथा॥क्षुंकारंकंठदेशेतुरुं
कारंहृदयेतथा ॥ रुंकारंगुह्यदेशेतुक्षुंकारंचह्युपस्थके ॥ ७ ॥ रुंकारंसर्वसंधौचरुं
कारंपादयोस्तथा ॥ देहन्यासंकृतंदेविकरंन्यासंतुकारयेत् ॥ ८ ॥ वामांगुष्ठेन्य
सेद्भद्रेओंकारंचत्रिदेवता ॥ रुंकारंवाह्निबीजंचतर्जन्यांतुन्यसेत्तथा ॥ ९ ॥ मध्य
मायांतुक्षुंकारंरुंकारंचअनामिके ॥ कनिष्ठिकायांक्षुंकारंदक्षिणांगुष्ठेत्रिदेवात
॥ १० ॥ तर्जन्यांदेवरुंकारंक्षुंकारंचैवमध्यमे ॥ अनामिकायांतुरुंकारंरुंकारंचकनि
ष्ठिके ॥ ११ ॥ एवंन्यासंकृतंदेविसर्वंशुभंभवेत्ततः ॥ शुद्धदेहीतुमेधावीसर्वकार्यं

93

क्षमापयेत् ॥ १२ ॥ यद्यपिचरतेकार्य्यंशुद्धदेहीतुमानवः ॥ ततःसफलकंदेविन
कुर्यादन्यथामातिः ॥ १३ ॥ यथान्यासंकरंकृत्वाभुक्तिंमुक्तिंसचेतसा ॥ कुंडसमी
पंसंस्थित्वास्थिरादृष्टिर्नरोभवेत् ॥ १४ ॥ मध्येगतेरविंदेविशंखंकुंडंचभास्वराम् ॥
बुद्बुदाकारसंभूतंचतुरंगुलमुत्थितम् ॥ १५ ॥ तंद्रेतोममकंदेविभुक्तिमुक्तिप्रदाय
कम् ॥ तंपिबतिभक्तियुक्तोमयैकाहितचेतसः ॥ १६ ॥ ओंकारद्वयसंयुक्तंक्षंकारत्र
यभूषितम् ॥ रुंकारंपंचसंयुक्तंदशाविंदुप्रपूजितम् ॥ १७ ॥ ओंकारंब्रह्मसंयुक्तंक्षु
कारंविष्णुरुच्यते ॥ रुंकारंचशिवंप्रोक्तंदशाक्षरंजपेन्नरः ॥ १८ ॥ दशाक्षरंजपेद्दे
विसर्वपापप्रणाशनम् ॥ कल्पपुस्तकमकल्पकल्पनंजल्पनंसकलपापनाशनम् ॥
पावनंविभुशिवेनकीर्त्तितंरक्षणीयमनघंप्रयत्नतः ॥ १९ ॥ इतिश्रीकेदारकल्पेईश्व

यह केदार कल्प का पुस्तक मुद्रित शुद्धता पूर्वक गौरीश यन्त्रालय में श्री भैरव प्रसाद बाजपेयी जी के आज्ञानुसार श्री युगल किशोर पाठक जी ने प्रकाश किया।

( पुस्तक मिलने का पता )

श्री भैरव प्रासाद बाजपेयी जी का गौरीश छापाखाना दशाश्वमेध सट्टी के सामने शहर बनारस ( काशी )

